**अरत्निरिंद्रकीलक इति ॥ [२.३.३२]**

चतुर्विंशत्यंगुलो लोहः कपाटयुगसंधिमाक्रम्याधोदेहलीविवरं प्रविशति कीलस्तस्मिन् इंद्रजिता किलेंद्रो यद्व इं[1]द्रकील इत्युच्यते। ऊर्द्धभागेऽपीष्यते, मस्तककीलाख्यः ॥ छ॥

**पंचहस्तमाणिद्वारमिति ॥ [२.३.३३]**

कपाटयोरुभयोरेकैकस्मिन्कपाटे **पंचहस्तोत्सेधं आणिद्वारं** क्षुद्रकद्वारमित्यर्थः। ......[2]तेऽपि द्वारे प्रवेशनिर्गमार्थं अत्रापि कपाटार्गलादिकं चार्थप्राप्तं कपाटानां च लोहकंटकचितत्वमर्पणम्, दुर्गविधानप्रस्तावात् ॥ छ ॥

**चत्वारो हस्तिपरिघा इति ॥ [२.३.३४]**

कपाटरक्षार्थं......[3]हस्तिनामसाध्याश्चत्वारः परिघाः हस्तिनिवारणार्थं **हस्तिपरिघाः** ॥ छ ॥

**निवेशार्द्धं[4] हस्तिनखमिति‡ ॥ [२.३.३५]**

निवेशः प्रतोल्याः पंचदशादिस्तदर्द्धं सार्द्धदंडद्वयादि हस्तिनखं देहलीतो......[5] [16B] कारेण क्रमान्निम्नं शिलामयम् ॥ छ ॥

**मुखसमः संक्रमः संहार्यो[5] भूमिमयो वा निरुदक इति ॥ [२.३.३६]**

**मुखं** द्वारशुषिरं तत्समः परिखासु **संक्रमो** मार्ग इत्यर्थः। अधिकस्य प्रयोजनाभावात्।......[6] रुपा मुखे माति तावन्मात्रेण परिखासु संक्रमणं युक्तम्। स च **संहार्यः** काष्ठयंत्रादिना सोदके खातप्रदेशे, **भूमिमयो वा निरुदके।** तावतीं भूमिमपहाय खातव्यमित्यर्थः। प्रतोली.........[7]शेषमाह।*

**प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं[6] गोपुरं कारयेदिति ॥ [२.३.३७]**

मुखमादित्वादधःशुषिरं तच्च द्वादशहस्ते प्राकारे पंचदशहस्तं 'पंचदशहस्तास्तोत्सेध' इति व[8]चनात्। अत्र गोपुरे प्राकारसममेव मुखं कर्तव्यम्। द्वादशहस्ते प्राकारे द्वादशहस्त एव मेंढकः। दशहस्ताः स्तंभाः हस्तद्वयं च स्तंभोर्द्धपरिक्षेपः। एवं सपरिकरः स्तंभोऽपि द्वादशहस्त......[9] एव प्रतोलीतस्त्रिहस्तान्न्यूनोच्छ्रयमित्ययं विशेषः। **त्रिभागगोधामुखमिति** त्रिभाग क्षेत्रस्य पंचदशा...मप्रतोधि......मुखाकारो मेंढकप्राकार एव .........[10]यो योधाना युद्धसौका(क)र्यार्थं द्वाररक्षातिशयार्थं च। प्रायो विवीताभिमुख गत्रामेनत द्वारमिति गोपुरं......टकयो श्रृंगाटकाकारेण त्रि......[11] तयोर्गोधामुखाकारं द्वारं भवति तत् कारयेत्। शेषं प्रतोलीसमानम्।

---

१ SJG क dropped. २ SJG °मणि°, S1 L °माणि°। ३ SJ °शार्धं। ४ SJG °नखः। ‡ *SJG read this Sutra with the following* मुखसम *etc.* ५ SJG संक्रमोऽसंहार्यो वा भूमि etc. ६ J suggests to read त्रिभागमधोमुखं for गोधामुखं and translate "Gopura is to be in three parts and with its entrance below."

पु[(?)] [17A] ष्करिणीद्वारमाह ।*

**प्राकारमध्ये वापीं कृत्वा पुष्करिणीद्वारम्[1] ॥ [२.३.३८]**

**प्राकारयोर्मेंढकयोर्मध्ये** यच्छुषिर तत्सम......फलकास्तारो भूमिकाबंधो......[(?)] युद्धसौका(क)र्यार्थमनेनैव विशेषेण प्रतोल्येव **पुष्करणीद्वार**मित्युच्यते । चतुरस्रा वापीत्युच्यते......चतुरस्रा तु......णीत्येकोऽर्थः ।

कुमारीपुरमाह ।*

**चतुः[(?)]शालमध्यर्द्धविवृतांतरं साणिकं[3] कुमारीपुरमिति ॥ [२.३.३९]**

चतस्रश्चतुर्दिश शाला एव कार्याः । न सीमागृहव्यपदेश. । प्रतोल्यपेक्षया अन्तरमर्द्धेनाधिक वापीस्थाने विधेयम्, प्रतिमचक्र .....[(?)]पनीय तत्क्षेत्रमपि वापीमध्ये प्रक्षिप्यैवमर्द्धेनाधिकमंतरं भवति । तच्च **साणिकं** आणियुक्त तुलाफलकान्तरे छिद्रयुक्तं युद्धसौकर्यार्थं **कुमारीपुर**मिव सर्वत. कुल्यमुक्त......[(?)]न शेषप्रतोलीसमानमिति ।

मुंडकद्वारमाह ।*

**मुंडहर्म्यद्वितलमुंडकद्वारमिति[4] ॥ [२.३.४०]**

**मुंडे**नोत्तमागाराभावात् । **हर्म्यद्वितलेन** युक्त प्रतोलीद्वारमिव **मुंडकद्वारम्** । यथा......[(?)]रहितो मुड इत्युच्यते । तथा द्वारमप्युत्तरागाररहितमिति ।

पंचद्वारभेदानभिधाय सर्वापवादमाह ।*

**भूमिद्रव्यवशेन वा निवेशयेदिति† ॥ [२.३.४१]**

भूमे समत्व विषमत्व च......[(?)] [17B] निम्नता च दुर्गा भूमिस्तदैकयैव परिखया पर्याप्तमथ समा तदा पच सप्त वा परिखा कारयेदिति मानवा. ।[(?)] यदि द्रव्यं काष्ठहिरण्याधिकं तदा उक्तादधिका अपि विशेषात् । न्यूने द्रव्ये न्यूना इति । निवेशयेद्दुर्गमिति वाक्यशेष ॥ छ ॥

प्राकाराद्यारूढयोधरणोपकरणस्थानार्थ...... ।*

**[त्रिभा][5]गाधिकायामां भांडवाहिनीः कुल्याः कारयेदिति ॥ [२.३.४२]**

यदि दशहस्तो विष्कम्भस्तदा पचदशहस्त **आयाम** इत्यादि । **भांडं** रणोपकरणं तद्वहंति चाविच्छिन्नतया निर्व्यूढेऽन्यदाधेयमि[ति]... .[(?)]कुल्यासु जलमविच्छिन्न तथात्र भाडमिति । **कुल्या**व्यपदेशो भाडशालानाम्, ताश्चानुप्राकारमतः **कारयेत्** ।

यद्वहति तास्तदिदानीं भाडमाह* ।

---

१ SJG कृत्वा वार्पी । २ S पुष्करिणीं द्वार, Svl °णीद्वार, J reads पुष्करिणीं, but reads द्वारं with the following sutra चतु शालमध्यर्धान्तराणीक, and says it should be read as सद्वार चतु शालमध्यमर्धान्तराणीक । ३ SJ °र्धान्तराणीक° Svl °र्धांचवृत्तान्तरमाणिक, G °र्धान्तराणिक । ४ SJG हर्म्यं द्वितल, Svl हर्म्यद्वितल ।
† SJ read this Sutra with the following SJG निवेशयेत् dropped
५ A part of the उत्थानिका is lost But SJG read the Sutra with त्रिभागा°, so does the commentary. ६ SJ यामा ।

तासु पाषाणकुद्दालाः कुठारीकांडक[ल्पनाः] ।[1]
मुसुंढीमुद्गरा दंडाश्चक्रयंत्रशतघ्नयः ॥
कार्याः कर्म्मारिकाशूलावेधनाग्राश्च वेणवः ।
उष्ट्रग्रीव्यग्निसंयोगाः कुप्यकल्पे च यो विधिः[7] ॥ [२.३.४३]

तासु कुप्यासु पाषाणा हस्तयन्त्रादिक्षेप......[3]ला: खननमुद्दार्थाः, कुठार्यश्छेदनमुद्दार्थाः, कांडकल्पनाः शरसंस्कारोपकरणानि। मुषंढ्योः गदादि......। मुद्गरा रजकमुद्गराकाराः प्रहरणविशेषाः, दंडा लोहदारुमया... [चक्रा][4]णि हस्तयंत्रक्षेप्याणि, यंत्राणि जामदग्न्यसर्वतोभद्रबहुमुखादीनि, बाणपाषाणादि......शितास्त्रशतं हंतीति...... कर्म्मारिका इत्ययस्कारघटिताः, शूलावेधनाग्राश्चककारयाः, वेणव उष्ट्रग्रीवाकार... दुर्गलंघे.........[5]णेयंत्रैस्तैलादिवानि यैः क्षिप्यते। कुप्यकल्पे च कुप्यानां कल्पना...[6] ..........[इति मुग्धविलासाङ्कयोग्यमयिरचित][3][18A]नीतिनिर्णीत्यभिधानायां कौटलीय-राजसिद्धान्तटीकायामध्यक्षप्रचारे तृतीयोऽध्यायः ॥

## [ अथ दुर्गनिवेशनामा चतुर्थोऽध्यायः । ]

..........[1]विधीयत इति सूत्रार्थः । संभवस्तु निहितमपि दुर्गमनिविष्टमनुपयोग-......[4]नामा कश्चिद्देवविशेष इति प्रतिकूलत्वात्सर्वैर्देवैर्विजित्योत्तानः पातितस्तस्य...... दग्रे ब्रह्मा स्थितः । देवो......[3]दगमनष्टम्य स्थितः । स तत्रस्थः पूज्यते । तस्य मर्मसिरावंसादि परित्यज्य निवेशः क्रियमाणः प्रशस्तो भवतीति। वास्तुविभागः कर्त्तव्य इति शेषः । त्रयः प्राचीना राजमार्गा......[5]र्वाभिमुखमचतीति। त्रय उदीचीना उदङ्मुखाः प्रागुदग्ग्रहणं मगल्यार्थम् । ते चैकाशीति पदे नवनवकविभक्ते वास्तुनि द्रष्टव्याः । वास्तुहृदयादुत्तरे नवभागे यथोक्त...........[6]पुरविधानमिति वचनसामर्थ्यात्। नह्येकाशीति पदं विहाय नवभागसंभवः । तथा चोक्तम् ।

"दश पूर्वायता वंशा दश चैवोत्तरायताः ।
नवभागकृता रथ्याः पदानां नव......... [7] ॥

दश पूर्वाभिमुखान्यनुवंशे सूत्राणि प्रसार्य दशैवोदङ्मुखानीनि। चतुरस्त्रपादानां नवनवका भवंति । नवके नवके मध्यमे पदे मर्मनिर्मोर्द्ध्वगामिनः.........[7][रा]जमार्गास्तथैव त्रय उदीचीनास्ते च महामर्म्मरूपा वंशाः । तथा चोक्तम् ।

पंचाशैकहृदयं नवमर्म्म चतुःशिरम् ।
उत्तानसंस्थितं विद्धि पुरुष वास्तुकं . ...... ॥[8][18B]

[ इतोऽग्रे मूलादर्शस्त्रुटितः । ]

*

---

१ SJG कुद्दालकुद्दार्थ° । २ SG मुसण्डि S\1 मुसण्डी । J भुशुण्डी । ३ SJG दंडचक्र । ४ SJG का° । ५ G शूल° । ६ SJG °मार्यांऽग्निसंयोगा । ७ S,J\1. योऽवधिः ।

# कौटलीयमर्थशास्त्रम् ।

*

## विनयाधिकारिकम् — प्रथमाधिकरणम् ।

### [ प्रकरणाधिकरणसमुद्देशः । ]

*

†ॐ नमश्शुक्र-बृहस्पतिभ्याम् ।

पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधिकरण-समुद्देशः—

विद्यासमुद्देशः ॥[१] वृद्धसंयोगः ॥[२] इन्द्रियजयः ॥[३] अमात्योत्पत्तिः ॥[४] मन्त्रिपुरोहितोत्पत्तिः ॥[५] उपधाभिश्शौचाशौचज्ञानममात्यानाम् ॥[६] गूढपुरुषोत्पत्तिः ॥[७] गूढपुरुषप्रणिधिः ॥[८] स्वविषये कृत्याकृत्यपक्षरक्षणम् ॥[९] परविषये कृत्याकृत्यपक्षोपग्रहः ॥[१०] मन्त्राधिकारः ॥[११] दूतप्रणिधिः ॥[१२] राजपुत्ररक्षणम् ॥[१३] अवरुद्धवृत्तम् ॥[१४] अवरुद्धे वृत्तिः ॥[१५] राजप्रणिधिः ॥[१६] निशान्तप्रणिधिः ॥[१७] आत्मरक्षितकम् ॥[१८] इति विनयाधिकारिकं प्रथमाधिकरणम् ॥† [१ वि.]

जनपदविनिवेशः ॥[१] भूमिच्छिद्रापिधानम् ॥[२] दुर्गविधानम् ॥[३] दुर्गनिवेशः ॥[४] सन्निधातृनिचयकर्म ॥[५] समाहर्तृसमुदयप्रस्थापनम् ॥[६] अक्षपटले गाणनिक्याधिकारः ॥[७] समुदयस्य युक्तापहृतस्य प्रत्यानयनम् ॥[८] उपयुक्तपरीक्षा ॥[९] शासनाधिकारः ॥[१०] कोशप्रावेश्य[8] ॥[११] रत्नपरीक्षा ॥[१२] आकारकर्मान्तप्रवर्तनम् ॥[१३] अक्षशाला ॥[१४] सुवर्णाध्यक्षः ॥[१५] विशिखा(खा)यां सौवर्णिकप्रचारः ॥[१६] कोष्ठागाराध्यक्षः ॥[१७] पण्याध्यक्षः ॥[१८] कुप्याध्यक्षः ॥[१९] आयुधागाराध्यक्षः ॥[२०] तुलामानपौतवम् ॥[२१] देशकालमानम् ॥[२२] शुल्काध्यक्षः ॥[२३] ...व्यवहारः[10] ॥[२४] सीताध्यक्षः[11] ॥[२५] ... ॥[२६] सुराध्यक्षः ॥[२७] सूनाध्यक्षः ॥[२८] गणिकाध्यक्षः ॥[२९] ना[ वध्यक्षः ॥[३०] गोऽध्यक्षः ॥[३१] अश्वाध्यक्षः ॥[३२] हस्त्यध्यक्षः ॥ ]‡[३३] [२ अ.] रथाध्यक्षः ॥[३४] पत्त्यध्यक्षः ॥[३५] सेनापतिप्रचारः ॥[३६]

†–† मूलादर्शेऽस्मिन्नयं पत्रमनुपलभ्यम् । अत एतद्द्विदण्डान्तर्गतः प्रथमाधिकरणप्रकरणसमुद्देश-परिशापकः समग्रोऽपि सूत्रपाठः मुद्रितपुस्तकादर्शात् समुद्धृतोऽत्र ।

‡ मूलादर्शे यत्र यत्र पत्राणां किंचिदूर्ध्वाधोभागास्त्रुटिताः, तेन च ये ये शब्दा वर्णा वा विनष्टा ते सर्वेऽत्र चतुष्कोणकोष्ठकान्तर्गताः मुद्रिता ज्ञेयाः ।

1 BJG °च्छिद्रविधानम् । 2 svl, G विनिवेश । 3 s °तृचेय°, svl °तृनिचेय । 4 s काल° । 5 BJG पटले, svl °पाले । 6 svl °पान° । 7 BJG °क्याधि° । 8 BJG कोशप्रवेश्यरत्न° । 9 BJG °शालायां सुवर्णाध्यक्षः । 10 BJG सूत्राध्यक्षः । 11 BJG सीताध्य° ।

मुद्राऽ[ध्यक्षः ॥[१७] विवीताध्यक्षः ॥[१८] समाहर्तृप्रचारः ॥[१९] गृहप]तिकवैदेहक-कतापसव्यञ्जनाप्रणिधयः ॥[२०] नागरिकप्रणि [ धिः ॥[२१] इति ]अध्यक्षप्रचारो द्विती[यमधिकरणम् ॥ ]

व्यवहारस्थापना ॥[१] विवादपदनिबंधः ॥[२] विवाहसंयुक्तम् ॥[३] दायविभागः ॥[४] वास्तुकम् ॥[५] समयस्यानपाकर्म ॥[६] ऋणादानम् ॥[७] औपनिधिकम् ॥[८] दासकर्मकरकल्पः ॥[९] सम्भूयःसमुत्थापनम् ॥[१०] विक्रीतक्रीतानुशयः ॥[११] दत्तस्यानपाकर्म ॥[१२] अस्वामिविक्रयः स्वस्वामिसम्बन्धः ॥[१३] साहसम् ॥[१४] वाक्पारुष्यम् ॥[१५] दण्डपारुष्यम् ॥[१६] द्यूतसमाह्वयम् ॥[१७] प्रकीर्णकमिति ॥[१८] धर्मस्थीयं तृतीयमधिकरणम् ॥ छ ॥

कारुकरक्षणम् ॥[१] वैदेहकरक्षणम् ॥[२] उपनिपातप्रतीकारः ॥[३] गू[२ द्वि.] ढाजीविनां रक्षा ॥[४] सिद्धव्यञ्जनैर्माणवकप्रकाशनम् ॥[५] शंकारूपकर्माभिग्रहः ॥[६] आशुमृतकपरीक्षा ॥[७] वाक्यकर्मानुयोगः ॥[८] सर्वाधिकरणरक्षणम् ॥[९] एकांगवधनिष्क(ष्क)यः ॥[१०] शुद्धश्चित्रश्च दंडकल्पः ॥[११] कन्याप्रकर्म ॥[१२] अतिचारदंडा इति ॥[१३] कण्टकशोधनं चतुर्थमधिकरणम् ॥ छ ॥

दंडकार्मिकम् ॥[१] कोशाभिसंह[र]णम् ॥[२] भृ [त्यभरणीयम् ॥[३] अनुजीविवृत्तम् ॥ समयाचारिकम् ॥ राज्यप्रतिसंधानम् ॥ एकैश्वर्यम् ॥ इति योगवृत्तं पञ्चममधिकरणम् ॥ ]

प्रकृतिसम्पदम् ॥[१] समथा(व्या?)यामिकम् ॥[२] इति मण्डलयोनिः षष्ठमधिकरणम् ॥ छ ॥

षाड्गुण्यसमुद्देशः ॥[१] क्षयस्थानवृद्धिनिश्चयः ॥[२] संश्रयवृत्तिः ॥[३] समज्यायसां गुणाभिनिवेशः ॥[४] हीनसंधयः ॥[५] विगृह्यासनम् ॥[६] संधायासनम् ॥[७] विगृह्य यानम् ॥[८] संधाय यानम् ॥[९] सम्भूय प्रयाणम् ॥[१०] यातव्यामित्रयोरभिग्रहचिन्ता ॥[११] क्षयलोभविरागहेतवः ॥[१२] प्रकृतीनां सामवायिकविप[रिमर्शः ॥[१३] संहितप्रयाणिकम् ॥[१४] परिपणितापरिप ] [२ प्र.] णितापसृताश्च संधयः ॥[१५] संधायप्रयाणकर्म ॥[१६] द्वैधीसंभाविकास्संधिविक्रमाः ॥[१७] यातव्य-

तंत्रोयुक्तयः ॥[1] तंत्रयुक्तमिति[2] पञ्चदशमधिकरणम् ॥ १५ ॥

इति शास्त्रसमुद्देशः ॥[४ द्वि.] पञ्चदशाधिकरणानि ॥[3] सासी(शी)तिप्रकरणशतम् ॥[4] सपञ्चाशदध्यायशंतम् ॥[5] षट् श्लोकसहस्राणीति ॥[6]

सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटल्येन कृतं शास्त्रं विमुक्तग्रंथविस्तरम् ॥

इति [7]विनयाधिकारिके प्रथमेऽधिकरणे[8] प्रथमोऽध्यायः ॥ छ ॥
प्रकरणाधिकरणसमुद्देशः ॥

*

## [ आन्वीक्षिकीस्थापना । ]

राजवृत्तिः[1] । आन्वीक्षि[9]की[2] त्रयी[3*] वार्ता[4] दण्डनीतिश्चेति[5] विद्याः[6] । त्रयी वार्ता दण्डनीतिश्चेति मानवाः[7] । त्रयीविशेषो[8] ह्यान्वीक्षिकी[ति ।

वा]र्ता दण्डनीतिश्चेति बार्हस्पत्याः । संवरणमात्रं हि [५ प्र.] त्रयी लोकयात्रांविद[9] इति । दण्डनीतिरेका विद्येत्यौशनसाः[10] । तस्यां [हि सर्व] [11]विद्यारम्भाः

[ टिप्पनकानि ]

१ राजवृत्तिरिति = अयमधिकारः । आत्मसंपद्गुणैराभिगामिकगुणैश्च अनरंजनाद्राजा । तस्य वृत्तिरनुष्ठानं ...... अधिकृतं ... राजवृत्तिरिति प्रधान ... ।

२ प्रत्यक्षपरोक्षाभ्यामीक्षितस्यानु पश्चादीक्षणमन्वीक्षा । यथानुमानं तत्प्रयोजनं यस्याः सा आन्वीक्षिकी न्यायविद्या ।

३* अत्रस्था टिप्पनी विनष्टा । एवं अग्रेऽपि यत्र यत्र टिप्पन्य विनष्टा ज्ञातास्तत्र तत्र एतादृशं चिह्नमङ्कितं ज्ञेयम् ।

४ वार्तेति वृत्तिरेव वार्ता । जगद्वृत्तिहेतुत्वात् कृष्यादिका ।

५ दंडनीतिरिति दंडो यथाद्विकस्तस्य नीतिः प्रणयनं दंडनीतिः ।

६ विद्यते चतुर्विधः पुरुषार्थो ... यकाभिस्ता विद्या राजविद्याः । राजवृत्तिः राजविद्या पाठः ।

७ मनोः शिष्याः ।

८ स्वमते हेतुवचनमिदम् । आन्वीक्षिकी तर्कः स च त्रय्यनुगतो न्यायविद्या... ।

९ लोकव्यवहारविदो ज्ञाः ।

१० शुक्रशिष्याः ।

११ सर्वा विद्याः=सर्वे आरंभा मात्स्यन्यायाभावे प्रारंभाणां प्रवर्तनात् ।

1 SJG तन्त्रयु° । 2 SJG इति तन्त्रयुक्तिः पञ्च° । 3 SGl °ति- । 4 SJG सपञ्चाशदध्यायशतं ॥ साशीतिप्रकरणशतं ॥ 5 SJG मुद्रितपुस्तकेषु 'कौटिल्येन' इति पाठः पठ्यते । 6 SJG इति कौटिलीयेऽर्थशास्त्रे । 7 SJG प्रथमाधिकरणे । 8 SJ राजवृत्तिः प्रथमो°; G प्रथमोऽध्यायः राजवृत्तिः । 9 SJ सर्वत्र 'आन्वीक्षकी' इति पठ्यते ।

प्रतिबद्धा इति ॥ चतस्र एवं विद्या इति कौटल्यः[3*] । ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम् ।

साङ्ख्यं[5] योगो[6] लोकायतं[7] च आन्वीक्षिकी । धर्माधर्मौ[8] त्रय्याम् । अर्थानर्थौ वार्तायाम् । नयापनयौ दण्डनीत्याम् । बलाबले चैतासा हेतुभिरन्वीक्षमाणा लोकस्योपकरोति । व्यसनेऽभ्युदये च बुद्धिमवस्थापयति । प्रज्ञावाक्यक्रियावैशारद्यं च करोति ।

प्रदीपः सर्वविद्यानामुपायः सर्वकर्म[५ हि ]णाम् ।
आश्रयः सर्वधर्म्माणां शश्वदान्वीक्षिकी मता ॥

इति विनयाधिकारिके प्रथमेऽधिकरणे द्वितीयोऽध्यायः ॥
इति विद्यासमुद्देशे आन्वीक्षिकीस्थापना ॥ छ ॥

*

## [ त्रयीस्थापना । ]

साम[10]ऋक्[11][12]यजुर्वेदास्त्रयस्त्रयी । अथर्ववेदेतिहासवेदौ[14] च वेदाः ।

१ एव शब्दोऽवधारणे । यस्मादभिधानस्वरूपोपकारकफला हि सर्वाभिज्ञसाध्यतत्त एव ।

२ *

३ अभिधानतो भेद दर्शयन्नाह । ताभिरिति ।

४ विद्यादिति = विचारयेत् । जानीयात् । लभेत । सत्तापादनेन विद्यमानो कुर्यादित्यात्म विद्यात्वम् । अनेन भिन्नाभिधानता । विद विचारणे विद ज्ञाने विद्लृ लाभे विद सत्तायामिति धातुचतुष्टयोत्पादनाभिधानत्वात् ।

५ स्वरूपभेद दर्शयन्नाह साङ्ख्यमिति । पञ्चविंशतितत्त्वानां सङ्ख्यान संख्या । तामधिकृत्य कृत साङ्ख्यं ।

६ योगो मोक्षेण सह संयोगकृत् । स च षडङ्ग ।
प्रत्याहारस्तथा ध्यानं प्राणायामोथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥
स च न्यायवैशेषिकशास्त्रोक्त ।

७ लोकायत बृहस्पतिप्रणीत नास्तिकशास्त्रम् । तच्च पूर्वपदाविभागेनावस्थितम् ।

८ सदाचरणमात्रमेव फल नान्यदिति । तथा च वक्ष्यति । धर्मार्थाविरोधात् (?) ...मनुभवेतेति ।

९ युक्तिभिः ।

१० उपकारांतर दर्शयन्नाह व्यसने इति ।

११ अध्यायप्रांते श्लोकमाह ।

१२ बार्हस्पत्यैराद्विक्षायाख्या स्थापनामाह । स्वरूपतस्तावत् । सामेत्यादि ।

१३ दृष्टादृष्टमर्थं वेदयतीति सहस्रशाखतया सति वैपुल्यात्सामवेदस्य प्रथममुपन्यासः । तदनंतरं पाठसौंदर्यादृग्वेदस्य ।

१४ प्रत्येक वेदग्रहणमप्रसिद्धस्य वेदत्वस्य स्थापनार्थम् ।

---

1 S च पा(दा) svl °वदा । 2 SJG चला वीक्षिकी । 3 S नयानयौ svl 'नयापन', Jvl नयापनयौ । 4 svl °स्य° । 5 G °माणा वीक्षिकीलोक° । 6 G पुस्तके सर्वत्र पुष्पिकाया आदौ 'इति कौटिलीयार्थशास्त्रे' एते शब्दा मुद्रिता उपलभ्यन्ते । 7 SJ 'प्रथमेऽधिकरणे विद्यासमुद्देशे अन्वीक्षकीस्थापना द्वितीयोऽध्याय । 8 S अन्वी° । 9 J स्थापना नाम । 10 SJG सामर्ग्य° ।

सि(शि)क्षा' कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषं' चांगानि । एष त्रयीधर्मश्चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः' ।

स्वधर्मो' ब्राह्मणस्याध्ययनमध्यापनं यजनं याजनं दा[१ प्र.]नं प्रतिग्रहश्चेति । क्षत्रियस्याध्ययनं' यजनं दानं शस्त्राजीवो भूतरक्षणं चेति' । वैश्यस्याध्ययनं यजनं दानं कृषिपाशुपाल्ये वणिज्या च । शूद्रस्य' द्विजातिशुश्रूषा' वार्ता कारुकुशीलवकर्म च ।

गृहस्थस्य स्वधर्माजीवस्तुल्यैरसमानगोत्रापिभिर्वैवाह्यं ऋतुगामित्वं 'देवपित्रतिथिपूजाभृत्येषु त्यागः शेषभोजनं च ।

ब्रह्मचारिणः स्वाध्यायोऽग्निकार्याभिषेकौ भैक्षव्रतित्वमाचार्ये प्राणान्तिकी वृत्तिः तदभावे गुरुपुत्रे' सब्र[१ द्वि.]ह्मचारिणि वा ।

वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या जटाजिनधारणमग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्यश्चाहारः ।

परिव्राजकस्य 'जितेन्द्रियत्वमनारम्भो निष्किंचनत्वं संगत्यागो भैक्ष-

ग्रतमनेकत्रारण्ये च वासो[1] बाह्याभ्यन्तरं च शौचम्[2]। सर्वेषामहिंसा सत्यं शौचमनसूयाऽऽनृशंस्यं[3] क्षमा च।

स्वधर्मः स्वर्गायानन्त्याय[4] च। तस्यातिक्रमे लोकः संकरादुच्छिद्येत[5]।

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं संदधानो हि प्रेत्य चेह च नंदति ॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः। [७ग्र.]
त्रय्याभिरक्षितो लोकः प्रसीदति न सीदति ॥

इति विनयाधिकारि[के प्रथमेऽधिकरणे तृतीयोऽ]ध्यायः ॥ ३ ॥
विद्यासमुद्देशे त्रयीस्थापना।

*

## [ वार्तास्थापना दण्डनीतिस्थापना च ]

कृषिपाशुपाल्ये[6] वणिज्या[7]* च वार्ता। धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। तया[8] स्वपक्षं[9] परपक्षं[10] च वशीकरोति[11] कोशदंडाभ्याम्।

आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः[13]। अलब्धलाभार्था[14] लब्धपरिरक्षिणी[15]* रक्षितविवर्धनी[16]* वृद्धस्य तीर्थे[17]

१ पात्रमृज्जलादिभिः। आभ्यन्तरं भावशुद्ध्या सा च सकलसत्त्वहितानुध्यानात्।
२ ...साधारणधर्ममभिधातुमाह।
३ मोक्षाय।
४ चतुर्वर्णाश्रमः।
५ दुर्भिक्षव्याधिमरकादिभिः।
६ ... पापमपि ... तं पराशरप्रोक्तं शास्त्रमपि कृषिः।
७ शालिहोत्रराजपुत्रपालकाप्यगौतमादिप्रोक्तं शास्त्रम.........।
८ *
९ धान्यं कृषिः पशून् पाशुपाल्यं हिरण्यकुप्ये वणिजा विष्टिं त्रितयमपि ददाति।
१० वार्तया।
११ स्वराष्ट्रम्।
१२ आवापम्।
१३ उपप्रदाननिग्रहाभ्यां।
१४ इदमेव शास्त्रम्।
१५ अलब्धयोर्धर्मार्थयोर्लाभार्थः।
१६ *
१७ *

1 SJG 'ग्रत' नास्ति। 2 SG अरण्यवासो, SVl ण्ये वासो। 3 SJ बाह्यमाभ्यन्तरं; SVl °शौच°। 4 S 'शौच' इति शब्दोऽर्धचन्द्राकारकोष्ठके निर्दिष्ट:, SVl शौचं। 5 SJG °नृशंस्यं। 6 SJG त्रय्याहि?°। 7 SVl तृतीय। 8 SJ विद्यासमुद्देशे त्रयीस्थापना तृतीयोऽध्याय.। 9 J वणि°। 10 SVl °पक्ष°। 11 SJG °रक्षणी°। 12 SJG तीर्थेषु।

प्रतिपादनी च । तस्यामायत्ता लोकयात्रा । तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात् । न [1] ह्येवंविधं वशोपन [७ द्वि] यनमस्ति भूतानां यथा दण्ड इत्याचार्याः ॥ नेति कौटल्यः । तीक्ष्णदण्डो हि भूतानामुद्वेजनीयो [2] भवति । मृदुदण्डः परिभूयते । यथार्हदण्डः पूज्यते [3] । सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति [4] । दुष्प्रणीतस्तु कामक्रोधाभ्यामवज्ञानाद् वानप्रस्थपरिव्राजकानपि कोपयति किमंग पुनर्गृहस्थान् । अप्रणीतस्तु मात्स्यन्यायमुद्भावयति । बलीयानबलं हि ग्रसते दण्डधराभावे । स च तेन गुप्तः प्रभवतीति [5] ॥

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन* पालितः ।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥

इति विनयाधिकारिके चतुर्थोऽध्यायः ॥ विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापना च [ ८ अ. ] ॥ छ ॥

## ॥ विद्यासमुद्देशः समाप्तः ॥

*

## [ वृद्धसंयोगः ]

तस्माद्दण्डमूलास्तिस्रो विद्याः । विनय [मूलो दण्डः प्राणभृतां ] योगक्षेमावहः । कृतकः स्वाभाविकश्च [6] विनयः । क्रिया [7] हि द्रव्यं [8] विनयति नाद्रव्यम् [9] । शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या [10] विनयति नेतरम् ।

विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो [11] नियमश्च [12] ।

१ तस्मात् कस्मादित्याह नह्येवंविधमिति ।
२ लोक. ।
३ वृद्धिं याति ।
४ *
५ पूर्वकृतशुभकर्मणा ।
६ क्रियाद्वृद्धसंयोगलक्षण ।
७ द्रव्यं सहजविनयगुणम् ।
८ द्रव्यं विनयतीत्यत्रैव नाद्रव्यं विनयतीति सिद्धे पुनर्कथनं द्रव्याद्रव्यपरिग्रहार्थम् ।
९ विद्याचतुष्टयम् ।
१० यो यस्या विद्याया कथितो.........नियमश्च । यथास्वम् ।
११ प्रत्युत्थानविनयादिः ।
१२ ब्रह्मचर्यैकभक्तादिः ।

1 BJG यात्रार्थीति° । 2 BJG °भवति° नास्ति । 3 BJG पूज्य । 4 BJG 'तु' नास्ति । 5 BJG °भवना° । 6 BJG °दो द्वि । 7 BJG 'ग च' नास्ति । 8 G चेत्यनु । 9 BJ इति विनयाधिकारिके प्रथमेऽधिकरणे विद्यासमुद्देशे वार्तास्थापना दण्डनीतिस्थापना च चतुर्थोऽध्यायः ।

वृत्तचौलकर्मा[१] लिपिं संख्यानं चोपयुञ्जीत ।

वृत्तोपनयन[२]स्त्रयीमान्वीक्षिकीं च सि(शि)ष्टेभ्यः[३] वार्तामध्यक्षेभ्यः[४]। दण्डनीतिं वक्तृप्रयोक्तृभ्यः[५]।

ब्रह्मचर्यं[६] त्वाषोडशाद्वर्षात्[1] । अतो गोदानम्[७] । दारकर्म चास्य[2] । नित्यश्च विद्यावृद्धसंयोगो विनयविवृद्ध्यर्थं[3] तन्मूलत्वाद्विनयस्य ।

पूर्वमहर्भा[८ दि.]गं हस्त्यश्वरथप्रहरणविद्यासु विनयं[९] गच्छेत्। पश्चि-ममितिहासश्रवणे[4]षु । पुराणमितिवृत्त[१०]माख्यायिकोदाहरणम्[११] । धर्मशास्त्र-मर्थशास्त्रं चेतिहासः[5] ।

शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं[१२] च कुर्यात् । [१३]अगृहीता-नामभीक्ष्णं[6] श्रवणं[7] च ।

श्रुताद्धि प्रज्ञोपजायते प्रज्ञया[8] योगो[१४] योगादात्मवत्तेति विद्यानां[9] सामर्थ्यम् ॥

विद्याविनीतो राजा[१५] हि प्रजानां विनये रतः ।
अनन्यां[१६] पृथिवीं [१७]भुङ्क्ते सर्वभूतहिते रतः ॥ छ ॥

इति विनयाधिकारिके पञ्चमोऽध्यायः वृद्धसंयोगः ॥[11]

*

१ गर्भपंचमवर्षे कृतं चौलकर्म यस्य ।

२ अध्युपयोगार्थं गुरोः समीपे नयनं उपनयनं तच्च ब्राह्मणस्य गर्भाष्टमवर्षे क्षत्रियस्यै-कादशवर्षे ।

३ अस्पष्टाक्षरेयं टिप्पणी ।

४ ... पण्याध्यक्षादिभ्यः ।

५ कर्मप्रधानत्वात् वार्तायाः ।

६ विद्याविघ्नप्रतिषेधार्थम् ।

७ मंत्रपूर्वकं समावर्तनाख्यं कर्म । मुंडनमित्यन्ये ।

८ भोजनकालात् प्राक् ।

९ तद्विद्यावृद्धसंयोगात् ।

१० इति एवं ह स्फुटं आस बभूव भुवनकोशादिकम् ।

११ इति राज्ञो वृत्तं नयानयाभ्यां संपत्तिविपत्तिप्रदर्शनार्थं भारतरामायणादि ।

१२ असंभूतकथावाक्यमुक्तप्रत्युत्तरान्वितम् । निदर्शनार्थमन्येषामुदाहरणमिष्यते । यथा तंत्रपंचकादि ।

१३ अभ्यासः ।

१४ मनोधारितानामर्थानाम् ।

१५ आत्मसंपद्गुणैरिति शेषः ।

१६ कुमारस्य भाविराजत्वं द्रष्टव्यम् ।

१७ अन्यनृपतिरहिताम् ।

१८ प्रमाणतः फलतश्च ।

1 SJ चापोड°; [illegible] च आ षोड° । 2 SG च । अस्य । 3 SJG विनयवृद्ध्यर्थम् । 4 SJG "°षु" नास्ति । 5 SJG चेतीतिहासः । 6 SJG °नामामी° । 7 SJG कृष्णश्रवणं । 8 G प्रज्ञाया । 9 Jvl योगादात्मविद्यासामर्थ्यम् । 10 SJG विद्यानाम° । 11 SJ प्रथमेऽधिकरणे वृद्धसंयोगः पञ्चमोऽध्यायः । G प्रथमाधिकरणे पञ्चमोऽध्यायः वृद्धसंयोगः ।

## [ अरिषड्वर्गत्यागः । ]

विद्याविनय[१ प्र.]हेतुरिंद्रियजयः[१] कामक्रोधलोभमानमदहर्षत्यागात्कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिंद्रियजयः । शास्त्रानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिंद्रियजयः ।

तद्विरुद्धवृत्तिरवश्ये(श्यें)द्रियश्चातुरंतोऽपि राजा सद्यो विनश्यति । यथा दाण्डक्यो[२] नाम भोजः[३] कामात् ब्राह्मणकन्यकामभिमन्यमानः सबन्धुराष्ट्रो विननाश । करालश्च वैदेहः । कोपाज्जनमेजयो ब्राह्मणेषु विक्रांतः । तालजङ्घश्च भृगुषु । लोभादैलश्चातुर्वर्ण्यमत्याहारय[१ द्वि.]माणः सौवीरश्चाजबिंदुः । मानाद्रावणः परदारानप्रयच्छन् दुर्योधनो राज्यादंशं च[८] । मदाद्दम्भोद्भवो भूतावमानी हैहयश्चार्जुनः । हर्षाद्वातापिरगस्त्यमत्यासादयन् वृष्णिसंघश्च द्वैपायनमिति ।

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः ।
सबंधुराष्ट्रा राजानो विनेशुरजितेंद्रियाः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेंद्रियः ।
अम्बरीषश्च नाभागो[११] बुभु[१० प्र.]जाते चिरं महीम् ॥

इति विनयाधिकारिके षष्ठोऽध्यायः ॥ छ ॥ इंद्रियजयेऽरिषड्वर्गत्यागः ॥

*

---

१ द्रवंति प्रानुवंति प्रमुखेन स्वविषयान् ।
२ चतुःसमुद्रांताव ... तापि ।
३ दंडकविषयाधिपो नृपः । वृहद्बाभिधानः ।
४ भोजान्वयः ।
५ कामादिनि दोषः ।
६ कोपात् ।
७ इच्छायाः कृष्टस्य वाऽपरो पेर. गुरुरयाः ।
८ सर्वस्वमत्याजिहीर्षु- ।
९ सुवीराणां राजा ।
१० अत्रषष्ठ्यमिनि दोषः ।
११ नाभागपुत्रः ।

## [ इन्द्रियजयः । ]

तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत । वृद्धसंयोगेन प्रज्ञाम् । चारेण चक्षुः[1] । उत्थानेन* योगक्षेमसाधनम् । कार्यानुशासनेन स्वधर्मस्थापनम् । विनयं विद्योपदेशेन । लोकप्रियत्वमर्थसंयोगेन* हितेन वृत्तिः[3] ।

एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत् । [१०द्वि.] [5]स्वप्नं[6] लौल्यम-[4]नृतमुद्धतवेषमनर्थ्य[7]संयोगमधर्मसंयुक्तमनर्थसंयुक्तं [8]च व्यवहारम् ।

धर्मार्थाविरोधेन कामं सेव(वे)त न [10]निःसुखः स्यात् । समं वा त्रिवर्गमन्योन्यानुबद्धं परस्परस्यानुपघातकं[11]* एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति । अर्थमूलौ हि धर्मकामाविति ।

मर्यादां[13] स्थापयेत् आचार्यानमात्यान्वा । य एनमपायस्थानेभ्यो वारयेयुः । छायानालिकाप्रतोदेन वाहनमिव[11] रहसि प्रमाद्यन्तमभितुदेयुः ॥

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते ।
कुर्वीत सचिवांस्तस्मात्तेषां च शृणुयान्मतम् ॥

* इति विनयाधिकारिके सप्तमोऽध्यायः ॥ छ ॥ इन्द्रियजयः[12] ॥

*

---

१ चक्षुरिन्द्रियकार्यम् ।
२ *
३ वर्णाश्रमाणामनुष्ठानानि तेषां शासनेन शिक्षणेन दंडनेन वा ।
४ *
५ कुर्वीतेति सर्वत्र योज्यते ।
६ निर्दिष्टनिद्रात्रिभागादन्यत्रालस्यनिरासार्थम् ।
७ धूतस्त्रुगपानादिव्यसनकारकैः संयोगं वर्जयेत् ।
८ यत्र क्रोधनः श्रोत्रियो न्यायपराजितोऽप्यारम्भहननं करोति ।
९ मायायोगविद्यापराजितोऽपि कोपान्मंत्रतंत्रादिभिरपकरोति ।
१० प्रतिषेधद्वयेनेत्युक्तम् । यदत्यसुखः स्यादिति ।
११ अन्यो द्वावेकं वा स्वोपरयाऽनुघ्नाति ।
१२ *
१३ यान् मर्यादां कुर्यादित्यन्वयः ।
१४ राज्यचक्रम् ।

---

1 sJG °वृत्तिम् । 2 s स्वप्नो° । 3 sJG वेषत्वम° । 4 sJG °मनर्थसं°; s vl °मानर्थ्य° ; 5 sJG संयोगं च । अधर्मः । 6 J चानर्थ° । 7 sJG बन्धम् । 8 sJG 'परस्परस्यानुपघातकं' नास्ति । 9 sJG अर्थ एव प्रधानः इति कौटिल्यः । अर्थमूलौ हि धर्मकामाविति । 10 s नालिका । 11 sJG °देन वा रहसि । 12 s इन्द्रियजये राजर्षिवृत्तं सप्तमोऽध्यायः; J प्रथमेऽधिकरणे इन्द्रियजये; G प्रथमाधिकरणे सप्तमोऽध्यायः इन्द्रिय° ।

## [अमात्योत्पत्तिः ।]

सहाध्यायिनोऽमात्यान् कुर्वी[त दृष्टशौचसामर्थ्यत्वात् इति भारद्वाजः। ते ह्यस्य विश्वास्याः भवन्तीति ॥

ने](११ अ)ति विशालाक्षः । सहक्रीडितत्वात् परिभवन्त्येन[म् । ये ह्यस्य गुह्यसधर्माणस्तानमात्यान् कुर्वीत । समानशीलव्यसनत्वा]त् । ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति ॥

साधारणो दोषं इति पाराशराः[3] । तेषामपि मर्मज्ञभयात्कृताकृतान्यनुवर्तेत[4] ॥

यावद्भ्यो गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः ।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥

य एनमापत्सु प्राणाबाधयुक्तास्त्वनुगृह्णीयुस्तानमात्यान् कुर्वीत । दृष्टानुरागत्वात् ।

नेति पिशुनः[1]* भक्तिरेषा[2]* न बुद्धिगुणः। संख्यातार्थेषु कर्मसु नियुक्ता ये यथादिष्टमर्थं सविशेषं वा कुर्युस्तानमात्यान्कुर्वीत । दृष्टगुणत्वात्[6] ॥

नेति कौणपदन्तः । अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत । दृ(११ ब)ष्टावदानत्वात्[6] । ते[7] ह्येनमपचरन्तमपि[8] न त्यजन्ति। सगंधत्वात्[9] । अमानुषेष्वपि चैतत् दृश्यते गावो ह्यसगंधं गोगणमतिक्रम्य सगंधेष्वेवावतिष्ठन्ते इति ॥

नेति वातव्याधिः । ते ह्यस्य सर्वमर्वगृह्य स्वामिवत्प्रचरंति[8] । तस्मा-

१ न तत्र दक्षमणमन करोति स ।
२ स्वमाणदानेन रक्षेयुः।
३ *
४ *
५ कुणपदन्त शांतनुर्गंगायाभापत्युतिदतोऽभूत्तस्यापत्य भीष्मः ।
६ दृष्ट पितृ .. . कालेऽवदानमुपधाशुद्धिर्येषाम् । दैप् शोधनेऽस्य धातो रूपमिदम्।
७ द्वितीयोपि हेतु ।
८ वाक्पारुष्यादिभिरुद्वेजयन्तमपि ।
९ गन्ध परिचयजनितस्नेह सवासाभ्यासजा प्रीति समानो गन्धः सगन्ध ।
१० सर्वमाक्रम्य प्रभुमात्रमेन स्थापयित्वा स्वामिवत्प्रचरंति। तदेव महानत्र दोष । तथा चोक्त–
वटवृक्षप्ररोहेव प्रकृति स्कन्धनाशिनी ।
अमात्याभ्युद्धियोगेन भवेन्मूलोपघातिनी ॥
चित्तविकारिणीति वचनात् ।

1 J मर्मज्ञत्वभयात् । 2 SJG एष दोष । 3 पराशर । 4 SJG °त्वादिति । 5 SJG °त्वादिति । 6 SJG °प° । 7 J °प° । 8 SJG प्रचरन्तीति ।

न्नीतिविदो [1]नवानमात्यान्कुर्वीत । नवास्तु यमस्थाने दण्डधरं मन्यमाना भयान्नोनपराध्यंतीति ॥

नेति वाहुदन्तीपुत्रः[2] । शास्त्रविदहष्टकर्माकर्मसु विषादं गच्छेत् । तस्मादभिजनप्रज्ञाशौचशौर्या[ १२ प्र. ]नुरागयुक्तानमात्यान्कुर्वीत । गुणप्राधान्यात्[3] ॥

[4]*सर्वमुपपन्नमिति कौटल्यः । कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते ।[5] सामर्थ्यतश्च ।

विभज्यामात्यविभवं देशकालौ च कर्म च ।
अमात्याः सर्व एवैते कार्याः स्युर्न तु मन्त्रिणः ॥

इति विनयाधिकारिके अष्टमोऽध्यायः ॥ ८ ॥ अमात्योत्पत्तिः[6] ॥

*

## [ मन्त्रिपुरोहितोत्पत्तिः । ]

जानपदोऽभिजातः स्ववग्रहः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुर्दक्षो[9] वाग्मी[10] प्रगल्भः प्रतिपत्तिमानुत्साहप्रभावयुक्तः क्लेशसहः शुचिर्मैत्रो[15] [ १२ द्वि. ]

---

१ क्रमागतान् पूर्वममात्यत्वेऽव्यवहृतान् ।

२ वाहुदंती इंद्रमाता तस्याः पुत्रः ।

३ सर्वेषाममात्यगुणानां मध्य एव एव गुणाः प्रधानभूताः ।

४ *

५ कार्याणि विजिगीषोः समाहर्तृकर्मान्तिकी सन्निधातृप्रदेष्टृस्थापनकार्योपयुक्तकर्मपर्यवसानान्येवमष्टादशस्वपि तीर्थेषु मूलामात्या अष्टादश । तेषां कारणिकत्वेन स्थिताः प्रत्येकं त्रयस्त्रय एवमुपयुक्ताश्चतुःपंचाशत्सर्वेऽपि द्विद्विसप्ततिसंख्याः । तदपेक्षया उच्यते कार्यसामर्थ्यादिति ।

६ अमात्यसंज्ञासामान्यान्मंत्रि...कर्तव्यत्वे प्राप्ते प्राह ।

७ जनपदभवः । शास्त्र इति शेषः ।

८ अभिजात इति । आचारे......योनौ च गर्भे कर्मणि चापि यः ।
शुचिः कृच्छ्रगतस्यापि न पापे रमतेऽस्य धीः ॥

९ तत्पयप्रवृत्ते स्वामिने सुखेनावगृह्णातीति ।

१० शास्त्रचक्षुः ।

११ अविस्मरणशीलः ।

१२ अल्पाक्षरेर्य टिप्पनी ।

१३ प्रतिपत्तिः प्रतिभा । अविमर्शेऽपि यथावदुत्तरं दीयते ।

१४ दैवप्रमित्ता प्रभुशक्तिः प्रभावः ।

१५ मित्र इति । मित्रमपकारी बहुमित्रो भवति ।

दृढभक्तिः शीलबलारोग्यसत्वयुक्तः स्तंभचापलहीनः संप्रियो[1] वैराणामकर्तेत्यमात्यसम्पत् ।

अतः पादार्धगुणहीनौ मध्यमावरौ[7] ।

तेषां जनपदमभिजनमवग्रहं[8] चाप्ततः[9] [10]परीक्ष्येत[11] समानविद्येभ्यः शिल्पं शास्त्रचक्षुष्मत्तां च । कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च । कथायोगेषु वाग्मित्वं प्रागल्भ्यं[13*] प्रतिभानवत्त्वं च । [ आपद्युत्साहप्रभावौ क्लेशसहत्वं च ] संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वं च । संवासिभ्यः[16] शीलबलारोग्यसत्त्वयोगम् । अस्तम्भमचापलं[18] च । प्रत्यक्षतः[19*] संप्रियत्वमवैरत्वं[20*] च ।

[21]प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः [स्वयंदृष्टं प्रत्यक्षम्, परोपदिष्टं परोक्षम्] कर्मसु [ १२ अ ] कृतेनाकृतावेक्षणमनुमेयम् ।

---

१ स्तंभो मिथ्याभिमानादविनयः ।
२ अस्थिति......ता ।
३ ......सौभाग्ययुक्तः ।
४ स्वामिदोषाद्दुरपमानामपि प्रशमयिता ।
५ युक्तमात्य ।
६ स्मृतिशास्त्रशास्त्रार्थेषु वितर्को ज्ञाननिश्चयः । दृढता मंत्रगुप्तिश्च मंत्रिसंपत्प्रकीर्तिताः ॥
७ मंत्रिणाविति शेषः ।
८ जन्मभूमिम् ।
९ ज्ञातिवर्गम् । अंतरंगत्वात् ।
१० उभयाप्तात् ।
११ परितमन्ताय चक्षुष्य इत्येव ।
१२ *
१३ इदं सूत्रं मूलादर्शलिपिकारेण परित्यक्तं ततः पश्चात् केनापि विदुषा पृष्ठस्याधोभागे लिपीकृतम् ।
१४ *
१५ *
१६ अथ कथमाप्तात्समानविद्येभ्यः संवासिभ्यः परोपदेशाद्गुणाः परीक्ष्याः यथा कर्मारंभेषु कथायोगेष्वापदि संव्यवहाराच्च लिंगा ......... ।
१७ *
१८ स्थैर्यम् ।
१९ *
२० *
२१ परी ...... ति सर्वत्र संबंधः ।

---

1 sv] भक्तिशील । 2 sJG सयुक्तः । 3 sJG चापल्यवर्जित । 4 sJG 'अभिजन' नास्ति । 5 s चाप्य[म]त· sv]; G चाप्यतः । 6 sJG °क्षेम । 7 G °वाग्मि° । 8 sJG °तिभ्यः । 9 sJG °चापल्यं ।

'यौगपद्यात्तु कर्मणामनेकत्वादनेकस्थ [त्वाच्च 'देशकाला]त्ययो मा भूदिति परोक्षममात्यैः कारयेदित्यमात्यकर्म ।

पुरोहितमुदितोदितकुलशीलं साङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणां अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत । तमाचार्यं शिष्यः पितरं पुत्रो भृत्यः स्वामिनमिव चानुवर्तेत ।

ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम् ।
जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम् ॥

इति विनयाधिकारिके नवमोऽध्यायः ॥ छ ॥ मन्त्रिपुरोहितोत्पत्तिः ॥

*

## [ उपधाभिश्शौचाशौचज्ञानममात्यानाम् । ]

मन्त्रिपुरोहितसखः सामा[१२ द्वि.]न्येष्वधिकरणेषु स्थापयित्वा आमात्यानुपधाभिः[11] शोधयेत् ।

पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजावक्षिपेत् । स सत्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेत् । अधार्मिकोऽयं राजा साधुधा-

१ *
२ अथर्वविहितप्रतिविधानैः ।
३ दंडनीत्यभिहितैः सामादिभिः ।
४ अनेन परस्परानुकूलता दर्शिता ।
५ पुरोहितेन । ब्राह्मणबलं च ब्राह्मणानुष्ठानतत्परतास्थापनार्थं तेन वृद्धिं नीता ।
६ 'कर्तुं' इति शब्दस्योपरि लिपीकृतम् । अपरा टिप्पनी पृष्ठस्याधोभागे लिखिता । यथा—
'क्षत्रेण ब्रह्मसंसृष्टं क्षत्रं च ब्रह्मणा सह । उदीर्णे दहतः शत्रून् वनानीवाग्निमारुतौ ॥'
७ कर्म ।
८ *
९ मंत्रिपुरोहितादिमतम् इति द्रष्टव्यम् । सेनापतियुवराजयोरप्यत्रोपयोगदर्शनात् । लोहकारोपकरणन्यायेन पुराणैर्मन्त्र्यादिभिरभिनवाः परीक्ष्यन्ते ।
१० त्रिवर्गभयाकंचनाभिरुपजापोक्तिभिः ।
११ असहमतया प्रतिपद्यमानम् । स्वामिसंकेतादेव परीक्षणार्थं परिक्षपेत् ।
१२ *
१३ सपुरोहितो बहिरवस्थितः ।
१४ पूर्वमेव शपथानमात्यं कारयित्वा यस्य ......... सा स्थितस्थं स्थित एवानभिमतेरिम मंत्रभेदः कार्यः ।
१५ *

1 ध्य अर्दोग°, क्रो दोग । 2 क्रा० यदे । 3 क्रो, ग, जो °नुगत । 4 क्रो 'तदा' [illegible] । 5 क्रा संचरेत् । 6 क्रो शासय ।

मिकंमन्यमस्य तत्कुलीनमपरुद्धं कुल्यमेकप्रग्रहं सामन्तमाटविकमौपपादुकं वा प्रतिपादयामः। सर्वेषामेतद्रोचते कथं वा तवेति*। प्रत्याख्याने शुचिरिति धर्मोपधा।

सेनापतिरसत्प्रग्रहेणावक्षिप्तः सत्त्रिभिः शपथपूर्वमेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय सर्वेषामेतद्रोचते कथं वा तवेति। प्रत्याख्याने शुचिरित्यर्थोपधा।

"परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा [महामात्रमेकैकमुपजपेत्] [१४ प्र.] राजमहिषी त्वां कामयते कृतसमागमोपा[या महानर्थश्च भविष्यतीति]। प्रत्याख्याने शुचिरिति] कामोपधा।

प्रहवणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत्। "*तेनोद्वेगेन राजा तानवरुन्ध्यात्। कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्। असत्प्रवृत्तोऽयं राजा साध्वेनं हत्वा अन्यं प्रतिपादयामः। सर्वेषामेतद्रोचते कथं वा तवेति। प्रत्याख्याने शुचिरिति भयोपधा।

---

१ कर्मभाग्योऽत्र जपथा साश्विनि क्रियाविशेषणम्।

२ कस्यचिदन्योऽभिमत इत्याह तत्कुलीनम्। तस्य राज्ञो भ्रातरं पुत्रं वा।

३ सोपि कृतार्थः सन् पित्रादिवैरमनुस्मरिष्यतीत्याशंक्याह कुल्यं कुलं च स्ववहितम्।

४ राज्ञा समानचिह्नं मालार्हम्।

५ इत्यर्थं यो राजा न भवत्यय च राजपुत्रमंद्गुणसमः।

६ राज्ये इति वाक्यशेषः।

७ ......... स्यादित्याशंकायां सर्वेषामिति महापुरुषाणाम्।

८ *

९ इष्टो विसृजति मायमनुजीविनो ......... ।

१० *

११ यस्य यस्य यश्मिन्नर्थे लोभोऽस्ति।

१२ परिभ्रमणशीलत्वात्।

१३ परीक्षेषु।

१४ 'महामात्रमेकैकमुपजपेत्' इत्यादाखण्डमादर्शे नोपलभ्यते किन्तु 'महामात्र'शब्दस्योपरि एतादृशी टिप्पनी लभ्यते—'मात्रा शब्देन विभूतिः। सा महती येषाम्।'

१५ *

१६ *

१७ नेष्टेत्यादेव।

तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु* कर्मसु स्थापयेत् ।
अर्थोपधाशुद्धान् समाहर्तृसन्निधातृनिचयकर्मसु ।
कामोपधाशुद्धान् वाह्याभ्यंतरविहाररक्षासु ।
भयोपधाशुद्धानासन्नकार्येषु राज्ञः ।
सर्वोपधाशुद्धान् मन्त्रिणः* कुर्यात् ।
सर्वत्राशुचीन् खनिद्रव्यहस्तिवनकर्मान्तेषूपयो [१४द्वि.]जयेत्* ।

त्रिवर्गभयसंशुद्धानमात्यान् स्वेषु कर्मसु ।
अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥
न त्वेव कुर्यादात्मानं देवीं वा लक्ष्यमीश्वरः ।
शौचहेतोरमात्यानामेतत्कौटल्यदर्शनम् ॥
न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत् ।
कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥
कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा ।
नागत्वाऽन्तर्निवर्तेत स्थिता सत्त्ववतां धृतौ ॥
तस्माद्बाह्यमधिष्ठानं कृत्वा कार्ये चतुर्विधे ।
शौचाशौचममात्यानां राजा मार्गेत* सत्त्रिभिः ॥

इति विनयाधिकारि[१५प्र.]के दशमोऽध्यायः ॥ छ ॥ उपधाभिश्शौचाशौचज्ञानममात्यानाम् ॥ छ ॥

*

१ *
२ *
३ उद्यानादि ।
४ अंतःपुरादि ।
५ ...... पालनेषु ।
६ आसन्नेषु च कार्येषु निर्भयत्वात् । जनपदोपप्लवात्............... ।
७ *
८ *
९ *
१० आचार्यमतमुपसंहरन्नाह ।
११ न कर्यमिति वाक्यशेषः
१२ अमात्यहृदयस्य ।
१३ कुलिकपेलोपयुक्तात् ।
१४ *
१५ कौटल्यः स्वमतमाह ।
१६ राजस्थाने कृष्णामात्यं कृत्वा राजमहिषीस्थाने कृष्णपत्नीं च कृष्णार्थादिकं चाभिधानम् ।
१७ त्रिवर्गभयभयशुद्धिपरीक्षालक्षणे ।
१८ *

1 ВJО 'कर्मसु' नास्ति । 2 B लक्ष्मी'; JO लक्ष्मी' । 3 O नागत्वान्तं । 4 O चार्ये ।

## [ संस्थोत्पत्तिः । ]

उपधाभिः शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत् ।

कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्रितीक्ष्णरसदभिक्षुकीश्च ।

परमर्मज्ञः प्रगल्भः छात्रः कापटिकस्तमर्थमानाभ्यां प्रोत्साह्य मंत्री ब्रूयात् । राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव प्रत्यादिशेति ।

प्रव्रज्यायाः प्रत्यवसितः प्रज्ञाशौचयुक्त उदास्थितः । स वार्ताकर्मप्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म'' का १५ ि रयेत् । कर्मफलाच्च सर्वप्रव्रजितानां ग्रासाच्छादनावसथान् ''प्रतिविदध्यात् । वृत्तिकामांश्चोपजपेत् । एतेनैव'' वेषेण' राजार्थश्चरितव्यो भक्तवेतनकाले चोपस्थातव्यमिति । सर्वप्रव्रजिताश्च स्वं स्वं वर्गमेवमुपजपेयुः ।

कर्षको वृत्तिक्षीणः'' प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः । स कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण'' ।

वाणिजको वृत्तिक्षीण[1] [१६ प्र] प्रज्ञाशौचयुक्तो [1]वैदेहकव्यञ्जनः[2]। स वणिक्कर्मप्रदिष्टायां भूमाविति समानं पूर्वेण[3]।

मुण्डो[4] जटिलो[5] वा वृत्तिकामस्तापसव्यञ्जनः[6]। स नगराभ्यासे(शे) प्रभूतजटि[2]लैर्न्तेवासी शाकं यवमुष्टिं[3] वा मासद्विमासान्तरं प्रकाशमश्नीयात् गूढमिष्टमाहारम्। [4]वैदेहि(ह)कान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः। शिष्याश्चा-[5] स्यावेदयेयुरसौ सिद्धस्सामेधिक[8] इति। समे[9] [१६ द्वि]धाशांसिभिश्चाभिगतानामङ्गविद्यया[10] शिष्यसंज्ञाभिश्च[12] कर्माण्यभिजनेप्सितानि[13] प्रत्यादिशेत्[14] अल्पलाभेमग्निदाहं[15] [6]चौरभयं[16] दूष्यवधं तुष्टिदानं विदेशप्रवृत्तिज्ञानं "इदमद्य श्वो वा भविष्यति इदं वा राजा करिष्यतीति"[17]। तदस्य गूढाः सत्रिणः सपादयेयुः।

१ वणिगेव वाणिजक ।

२ विदेहराजशासनानुष्ठानाद्वैदेहकव्यजन ।

३ शेष गृहपतिसमानम् ।

४ शाक्याजीवादि ।

५ पाशुपतादि ।

६ जटिलग्रहण मुण्डादीनामप्युपलक्षणार्थम्। यदि शाक्य क्षपणको वा तापसव्यञ्जनस्तदा तच्छिष्या मुण्डा अपि भवति ।

७ सिद्धतापसव्यजनस्य ।

८ समेधायै वृद्धये प्रभवति ।

९ समेधन समेध ।

१० मर्थिनाम्। प्रसिद्धिवशात् ।

११ यथा मद्द प्रश्नसमये अंगस्पर्श दृष्ट्वा आदेशः क्रियते ।

१२ संकेतितस्वांगविकारै ।

१३ जातेरनुरूपाणि ।

१४ प्रतिपुरुषम् ।

१५ मैत्री ते पञ्चपुण शास्यतीति ।

१६ चौरभयं अग्निदाहं च दूष्यगृहेष्वेव ।

१७ राज्ञः सकाशादस्य मृत्युरिति ।

१८ उदन्त । शिशिरपाशपतगलपद्मपत्रकाद्विद्रिष्वा ।

१९ आदिशेदिति संबध ।

1 SVI वैदेहिक। 2 SJG मुण्डजटिल SVI मुण्डनको। 3 SJ यवसमुष्टिं G यवसमुष्टिं। 4 SJG °वैदेहका°। 5 J शानिभि। 6 SJG °नैश्वसिता—यादिशेद°। 7 SJG चोर°। 8 SJGVI तुष्टदानं। 9 SJG °वरिष्यतीति। 10 SJG सन्निणः। 11 SG संवाद°।

सत्यप्रज्ञावाक्यशक्तिसम्पन्नानां[1] राज्यभाग्यमनुव्याहरेत् । मन्त्रिसंयोगं च ब्रूयात्[2] ।

मन्त्री[3] चैषां वृत्तिकर्मभ्यां वियतेत । ये च राज्ञः[4] कारणक्रुद्धास्तानर्थमानाभ्यां [१७अ.] शमयेत् । अकारणक्रुद्धांस्तूष्णींदण्डेन राजद्विष्टकारिणश्च ।

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम् ।
जानीयुः शौचमित्येताः पञ्च संस्थाः प्रकीर्तिताः ॥

इति विनयाधिकारिके एकादशोऽध्यायः ॥११॥ गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः ॥७॥

*

[ गूढपुरुषप्रणिधिः । ] –

ये चास्य सम्बन्धिनोऽवश्यभर्तव्यास्ते लक्षणमङ्गविद्यां जम्भकविद्यां मायागतमाश्रमधर्मं निमित्तमन्तरचक्रमित्यधीयानाः सत्रिणः संसर्गविद्यां च ।

---

१ अस्य राज्ञः सकाशादस्य भाग्यं उदस्मीभविष्यतीति । [रा]ज्ञो वा भाग्यं लक्षणचक्रवर्तित्वम् । अनेन राजपुरुषसंग्रहः स्यात् ।

२ संकेतितः ।

३ एवं च सर्वेष्वप्ये सिद्धे सर्वेऽपि कृत्यार्थिनः स्वाशयं प्रकाशयन्ति । शुद्धाशुद्धाश्च ज्ञायन्ते । तेषां प्रतिविधेयमाह ।

४ अभिचारादिविधायिनः ।

५ इति प्रकारे । एता अष्टौ षट्प्रमाणाश्च अमात्याश्रयाः । पंचसु तु न व्यभिचरन्ति । अमात्याद्यविचारितो गूढपुरुषवर्गोऽन्तर्भावः । अथवा च शासनपर्यन्ते ।

६ तस्य नैकस्मिन् स्थाने स्थिताः ।

७ संचारोऽन्तरभिधीयते ।

८ आप्तानां मन्त्रिपुरोहितसेनापत्यादीनां संबंधिनः ।

९ अवश्यभर्तव्याः ।

१० ........ लक्षणादि ............परिज्ञानपरकम् ।

११ पूर्वोक्तं शुभाशुभज्ञानपरम् ।

१२ *

१३ *

१४ *

१५ भौमान्तरिक्षदिव्यैः शुभाशुभसूचकम् ।

१६ *

१७ *

तेषां बाह्यं चारं छत्रभृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः
तीक्ष्णा[१]* विद्युस्तं सत्रिणः संस्थास्वर्पयेयुः ।

[सूदाराळिकस्नापकसंवाहकास्तरककल्पकम]साधकोदकपरिचारका[१८ प्र.]
रसदाः कुब्जवामनकिरातमूकबधिरान्धजडे [च्छद्मानो नटनर्तकगायनवाद-
१ कवाग्जीवनकुशी]लवाः स्त्रियश्चाभ्यन्तरं चारं विद्युस्तं भिक्षुक्यः संस्था-
स्ववसर्पयेयुः[२] । संस्थानां कापटिकादीनां[३]मंतेवासिनः संज्ञा[४]*लिपि[५]*भिश्चारस-
ञ्चारं[६]* कुर्युः । न चान्योन्यं संस्थास्ते वा विद्युः । भिक्षुकीप्रतिषेधे द्वाःस्थप-
रम्परामातापितृव्यञ्जनाः[८] शिल्पकारिकाः कुशीलवा[९] दास्यो वा गीतवाद्य-
पात्र्यभाण्डे[११]गूढलेख्यसंज्ञाभिर्वा बाह्यानां चारं निर्हरेयुः । दीर्घरोगो[१२]*-
११ न्मादा[१३]ग्निरसविसर्गेण वा गूढनिर्गमनम्[१४]* । त्रयाणा[७]मेकवाक्ये सम्प्रत्यय
इति[८] । तेषामभीक्ष्णविनिपाते तूष्णीं[९]दण्डैः प्रतिषेधः[१०] । कण्टकशोधनो-
क्ताश्चापसर्पाः परेषु[११] कृतवेतना वसेयुः । सम्पातनिश्चारार्थं त उभयवेतनाः ।

१ *
२ म्लेच्छजातिवर्धरादिराः ।
३ *
४ *
५ *
६ *
७ संस्थाः संस्थान्तरचारसंचाराः चारसंचारान्तरं च ।
८ मातापितृवत् व्यवहरतीति भूत्वा पुत्रापत्यकेऽ[illegible] किल दर्शयन्तः ।
९ तत्प्रतिषेधे कौ ........
१० तद् प्रतिषेधे इति शेषः ।
११ सूर्यभाण्डान्तरनिहितगूढलेख्यैः ।
१२ *
१३ अनभिलक्षितशिरोवेदनादिः ।
१४ *
१५ टिप्पणीयमस्पष्टाक्षरा ।
१६ *
१७ *
१८ *
१९ अरिमित्रादिषु ।
२० अस्पष्टाक्षरा ।

1 BJG °जडान्ध । 2 BJG °सर्पयेयु । 3 BJG 'कापटिकादीनां' नास्ति । 4 S 'पात्र्य.' नास्ति; ST1 JG गीतपात्र्यवाद्य° । 5 BJG 'बाह्यानां' नास्ति । 6 J निर्हरेयु । 7 ST1 त्रयाणामन्योन्यमेक° । 8 BJG 'इति' नास्ति । 9 G तूष्णींदण्ड. । 10 BJG प्रतिषेधो वा । 11 BJG °धारमर्थं । 12 B °तथोर्थं; ST1 °तनिश्चारार्थं ।

[१]गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान्[२] ।
तांश्चारि[३] [१८ द्वि.] प्रहितान् विद्यात्तेषां[४] शौचं च तद्विधैः[४] ॥
[५]एवं शत्रौ च मित्रे[६] च मध्यमे चावपेच्चरान् ।
उदासीने च तेषां च तीर्थेष्वष्टादशस्वपि[७] ॥
अन्तर्गृहगतास्तेषां[८] कुब्जवामनपंडकाः[२] ।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥
दुर्गेषु[९] वणिजः संस्था दुर्गान्ते सिद्धतापसाः ।
कर्षकोदास्थितौ[३] राष्ट्रे राष्ट्रान्ते व्रजवासिनः ॥
वने वनेचराः[४] कार्याः श्रवणा[१०]टविकादयः[११] ।
परप्रवृत्तिज्ञानार्थाः [१२]शीघ्राश्चारपरम्पराः ॥
परस्य चैते[६] बोद्धव्याः तादृशैरेव तादृशाः ।
चारसञ्चारिणः संस्था गूढाश्चा[१३]गूढसंज्ञकाः[१४][७] ॥
[१५]अकृत्यान् [१९ प्र.] कृत्यपक्षीयैः [१६]दर्शितान् कार्यहेतुभिः ।

१ अस्पष्टाक्षरा ।                    २ उभयवेतनान् ।
३ उक्तं च –
मत्स्यस्येव गतिं मत्स्याश्चाहेरिव पदान्यहिः । स्वचेष्टितैर्विजानन्ति धूर्ता धूर्तविचेष्टितम् ॥
४ उभयवेतनैः स्वकीयैः ।
५ अरिविषये गूढपुरुषप्रणिधानं दर्शयन्नाह ।
६ शत्रौ च शत्रुवत्, शत्रुमित्रे तन्मित्रे मित्रे च स्वकीये समुच्चयात् तन्मित्रेषु च मध्यमे उदासीने समुच्चयात् तन्मित्रेषु च निक्षिपेत् चरान् ।
७ उक्तेन न्यायेन मंत्र्यादिषु तीर्थेष्वष्टादशसु च । तेषां पूर्वोक्तानाम् एवं द्वादश ......... विजिगीषुं विहायैकदेशराजानः प्रत्येकं तेषां मंत्र्यादितीर्थेष्वष्टादशैव गूढप्रणिधानस्थानानां द्वेशते सप्तविंशत्यधिके । एषु स्थानेषु ।
८ स्थानवशात् चरावापमाह ।
९ संचारप्रणिधानमुक्त्वा संस्थाप्रणिधानमाह । दुर्गेषु वणिजः संस्था इत्यादि ।
१० वनेचरा गृहपतिक ......... भेदात् श्रवणा इति मुंडतापसबौद्धजैनाः । आटविकादयो गृहपति...... ।
१२ टिप्पनीयमस्पष्टाक्षरा ।
१३ *
१४ ......तपस्वि......गृहपतिकर्मसंज्ञिताः ।
१५ परस्य शत्रोर्बोद्धुं न शक्यते । उक्तं च –
कः समानाभिहारेण ......... नान् । भूल्यराशौ स्थितान्वेत्ति शंखे क्षीरकणानिव ॥
तत् परिज्ञानार्थं उपायान्तरमाह । अकृत्यानित्यादि ।
१६ क्रोधलोभभयमानैः कारणभूतैः प्रतिरूपितान् । तद्यथा मंत्री सेनापत्यादीकान् कृतककृत्यान् कृत्वा मानाधिकारभ्रष्टान् राष्ट्रान्निर्वासयेत् । तेषु च परावसर्पा विश्वसन्ति । ततश्च ते विजिगीषोः सूचयन्त्येवं परावसर्पज्ञानार्थं मुख्यानन्ते वासयेदिति ।

1 SJG °गृहचरास्तेषां । 2 SG षण्डकाः; J वधकाः । 3 SJG °स्थिता । 4 B वनचरैः; SVl वनचराः । 5 SJG श्रमणा° । 6 S चैके; SVl चैते । 7 SJG संज्ञिताः ।

परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥[1]

॥ इति विनयाधिकारिके द्वादशोऽध्यायः ॥ छ ॥ गूढपुरुषोत्पत्तौ संचारोत्पत्तिः गूढपुरुषप्रणिधिः ॥ छ ॥[2]

*

## [ कृत्याकृत्यपक्षरक्षणम् । ]

कृतमहामात्रापसर्पः[3] पौरजानपदानपसर्पयेत्[4]। सत्रिणो द्वन्द्विनस्तीर्थसभापूगजनसमवायेषु विवादं कुर्युः। सर्वगुणसम्पन्नश्चायं राजा श्रूयते। न चास्य कश्चित् गुणो दृश्यते यः। पौरजानपदान् अतिमात्रं[8] दण्डकराभ्यां पीडयति[9]। तत्र येऽनुप्रशंसेयुः तानितरस्तं[10] च प्रतिषेधयेत्। मात्स्यन्यायाभिभूताः
॥ [११द्वि.] प्रजा मनुं वैवस्वतं राजानं चक्रिरे[11]। धान्यषड्भागं पण्यदशभागं हिरण्यं चास्य भागधेयं प्रकल्पयामासुः। तेन भृता राजानः प्रजानां

१ कृतलक्षणाः। कृता महामात्रेषु महार्देषु सतीर्थेषु च शत्रुमित्रादिषु च अपसर्पा येन।
२ यत्रावतरंति जनाः पुण्यार्थमथार्थं वा सोमनाथ-कालप्रियादिकम्।
३ समायान्ति गोष्ठी जना यस्यां सा सभा।
४ पूगाः श्रेणीगणाः कुम्भकारादीनाम्।
५ प्रेक्षणोत्सवादिषु यत्र जनाः समवयंति।
६ द्वौ द्वौ भूत्वा द्वंद्वं युग्मं युगलमिति पर्यायाः। विवादो वा द्वंद्वं तद्विद्यते येषां ते कृत्या-कृत्यपक्षरक्षार्थं विवादं कुर्युः।
७ विवादस्वरूपमाह।
८ कृत्याः।
९ साधूक्तमिति।
१० कृत्यान्।
११ द्वितीयः सत्री।
१२ तं च पूर्वपक्षवादिनं सत्रिणम्।
१३ कुंकुमादि।
१४ यथोचितम्।
१५ भागम्।
१६ रक्षणसामग्रीसंपादनाय।
१७ भागेन पुष्टाः।

1 SJG परापसर्प। 2 S गूढपुरुषोत्पत्तौ संचारोत्पत्तिः द्वादशोऽध्यायः; J प्रथमेऽधिकरणे गूढ° संचारो° गूढपुरुषप्रणिधि° द्वादशो,° G प्रथमाधिकरणे द्वादशो° गूढ° संचारो° गूढपुरुष°। 3 S गूढपुरुषप्रणिधिः कृतमहामात्या°। 4 SG °मात्या°; SVl °मात्रा°। 5 SJG °पसर्पः। 6 SJG °पसर्पयेत्। 7 SJG सभाशालापूग°। 8 SJG 'अतिमात्रं' नास्ति। 9 पीडयतीति। 10 GVl चक्रुः। 11 SJG चास्य।

योगक्षेमावहाः[1]। तेषां किल्बिषमदण्डकरा हरन्ति[2]। अयोगक्षेमावहाश्च प्रा(प्र?)जानाम्[4]। तस्मादुञ्छषड्भागमारण्यका अपि निर्वपन्ति 'तस्यैतद्भागधेयं योऽस्मान् गोपायतीति'। इन्द्रयमस्थानमेतत्[7] राजानः प्रत्यक्षहेडप्रसादाः[6]। तानवमा[२०अ.]न्यमानान्[8] दैवोऽपि दण्डः स्पृशति[7]। तस्माद्राजानो नावमन्तव्या इत्येवं[9] क्षुद्रकां प्रतिषेधयेत्। किंवदन्तीं च विद्युः[9]।

ये[10] चास्य धान्यपशुहिरण्यान्याजीवन्ति तैरुपकुर्वन्ति[11] व्यसनेऽभ्युदये[12] वा कुपितं बन्धुं राष्ट्रं वा व्यावर्तयन्ति[10] अमित्रमाटविकं वा प्रतिषेधयन्ति। तेषां[15] मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः।

तुष्टान् भूयोऽर्थमानाभ्यां पूजयेत्[11]। अतुष्टांस्तुष्टिहेतोस्त्या[२०द्वि.]गेन प्रसादयेत्[12]। परस्पराद्वा भेदयेदेतान्[13] सामन्ताटविकतत्कुलीनापरुद्धेभ्यश्च[14]। ॥

१ पुरुषार्थलाभपालनसंपादका भवन्ति।

२ प्रजानां व्यवस्थां राजकृतामाह। राज्ञां पापमदत्तदण्डकराः प्रजा हरन्ति। प्रजानां च पापं अयोगक्षेमावहाः राजानो हरन्तीति संबंधः।

३ वानप्रस्थाः।

४ राजोद्देशेन भूमौ क्षिपन्ति।

५ पारत्रिकं दोषं दर्शयित्वैहिकमपि दर्शयत्याह। उपलक्षणपरं चैतत्सकललोकपालस्थानं राजानः। तथोक्तम्—अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च।
धनदवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥
यस्मादेषां नरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादभिभवत्येष सर्वभूतानि तेजसा॥ इति।

६ निग्रहधादिरावाधः। हेड विबाधायामिति पाठात्।

७ दैवस्यायं दैवः। व्याधिमरकदुर्भिक्षादिः।

८ कृत्यभावोपगमान्निवारयेत्।

९ राज्ञि अनुरागविरागविषयाम्।

१० वैषयिकमहत्तरग्रामकूटश्रेष्ठ्यादयः।

११ धान्यादिभिः।

१२ पुत्रजन्मादौ।

१३ सामादिभिः परविषयगमनात्।

१४ विलोपार्थं स्वविषयं प्रविशन्तं दंडेन।

१५ वैषयिकादीनां तुष्टातुष्टत्वं विदित्वा राज्ञो निवेदयेयुरिति भावः।

१६ वैषयिकादीन्।

१७ अन्यसंहत्वानुद्दिश्याह। संसक्तांताः सामंता आटविका ये प्रचंडास्तत्कुलीना राजकुलोत्पन्ना अपरुद्धाः परिवर्जितपुत्रादयस्तेभ्यश्च भेदयेद्यत्ताः पश्चात्सामादिभिस्तुष्टा भवंति।

1 SJG क्षेमवहाः। 2 GVl किल्बिषमदण्डकरा अयोग°। 3 SJvlG योग; svl अयोग। 4 SJG क्षेमवहा°। 5 SJG प्रजानाम्। 6 SJG निवपन्ति; GVl निर्वपन्ति। 7 svl इन्द्रिय°। 8 SJG °मन्यमानान्; GVl मानानां देवोऽपि दण्डं स्पृशति। 9 SJG 'एव' नास्ति। 10 SJG व्यावर्तयन्ति। 11 SG तुष्टान् भूयः पूजयेत्; svl अर्थमानाभ्यां पूजयेत्; J तुष्टानर्थमानाभ्यां पूजयेत्। 12 SJG त्यागे च प्रसादयेत्; GVl प्रतिसाधयेत्। 13 SJJ एतान्। 14 SJG अवरुद्धे°।

तथाऽप्यतुष्यतो दण्डकरसाधनाधिकारेण जनपदविद्वेषं ग्राहयेत् । विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा साधयेत् । गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत् परेषामास्पदभयात् ।

क्रुद्धलुब्धभीत(ता?)मानिनस्तु परेषां कृत्याः । तेषां कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसम्बन्धममित्राटविकसंबंधं [२१४] वा विद्युः ।

तुष्टानर्थमानाभ्यां पूजयेत् । अतुष्टान् सामदानभेददण्डैस्साधयेत् ।

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः ।
परोपजापात्संरक्षेत् प्रधानान् क्षुद्रकानपि ॥

इति विनयाधिकारिके त्रयोदशोऽध्यायः ॥ ७ ॥

*

## [ कृत्याकृत्यपक्षोपग्रहः । ]

कृत्याकृत्यपक्षोपग्रहस्स्वविषये व्याख्यातः । परविषये वाच्यः । संश्रुत्यार्थान् विप्रलब्धस्तुल्यकारिणोः शिल्पे वोपकारे वा विमानितः वल्लभावरुद्धः समाहूय पराजितः प्रवासोपतप्तः [२१६] कृत्वा व्ययमलब्धकार्यः स्वधर्मा-

दायाद्यादवरुद्धः[1] । मानाधिकाराभ्यां[2] भ्रष्टः कुल्यैरन्तर्हितः[3] प्रसभाभिमृष्ट[4]स्त्रीकः कारामभिन्यस्तः [5]परोक्तदंडितः[6] मिथ्याचारवारितः[7] सर्वस्व[8]माहारितः बन्धनपरिक्लिष्टः प्रवासितबन्धुरिति[9] क्रुद्धवर्गः[10] ॥

स्वयमुपहतः[11] विप्रकृतः[12] पापकर्माभिख्यातः तुल्यदोषदण्डेनोद्विग्नः पर्यात्तभूमिः दण्डोपनतः[13] सर्वाधिकरणस्थः सहसोपचितार्थः तत्कुलीनोपाशंसुः[14] प्रद्विष्टो राज्ञा राजद्वेषी चेति भीतवर्गः ॥

परिक्षीणः अन्यात्तस्वः कदर्यः मूलहरः तादात्विकः व्यसनी अत्याहितव्यवहार[15]श्चेति लुब्धवर्गः ॥

आत्मसंभावितः[16] [२२४] मानकामः[17] शत्रुपूजामर्षितः[18] नीचैरुपहितः तीक्ष्णः साहसिकः भोगेनासन्तुष्ट इति मानिवर्गः ॥ ॥

---

१ न्यायलभ्यात् दायलभ्यद्रव्यालाभात् यदि कृत ।
२ आसनादिकात् मानात् समाहर्तृत्वादेरधिकारात् भ्रष्ट ।
३ दायादैस्तिरोहित ।
४ बलाद्दूषितस्त्रीको राज्ञाऽन्येन वा । उक्तं च–
स्तेन साहसिको हिंस्र पारदारिक एव वा । राज्ञा स्यादपराधेन ये चान्ये पापकारिण ॥
५ दोष विना बंदिशालायां क्षिप्त ।
६ पिशुनवचनेनानिर्णायं दण्डित क्रुध्यति । उक्तं च–
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रपशून् घ्नन्ति राज्ञस्तामकुर्वत ॥
७ त्रिवर्गशून्यात् द्यूतादिव्यसनान्निवारित । उक्तं च–
रिपुभयति [illegible] प्रज्ञा मिथ्याचारनिवारिता इति ॥
८ गृहीतसर्वस्व ।
९ यमपुर प्रेषितबान्धव ।
१० वर्गग्रहण वाक्पारुष्यादीनां ग्रहणार्थम् ।
११ कोश दण्ड च विनाश्याहृतकार्यो भीतो भवति ।
१२ विरुद्ध प्रकर्षेण कृत राजद्विष्टमभिचारादि ...... ।
१३ ..........अनुक्तोऽपि शत्रुवध प्रतिज्ञाय मार्थितकोशदण्डः ।
१४ यत्कुल राज्ञस्तत्कुलापत्य स यदि राजा भवतीति कृतस्पृहः तेन राजनिग्रहा.........
१५ स व्यवहारो महा. .... ।
१६ रूपशौर्यादिभिरात्मनैवात्मान संभावयन् .. ।
१७ अनात्मसंभावितोऽपि मानमिच्छति ।
१८ शत्रौ पूजामसहमान- । अत्र च अमर्षोऽसहन न क्रोध ।
१९ टिप्पनीयमस्पष्टाक्षरा ।

नास्य [२१ दि] गुह्यं[1] परे विद्युः कर्म्म चिकीर्षितम्।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा ॥

नैकस्य मन्त्रसिद्धिरस्तीति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। अनुपलब्धस्य ज्ञानमुपलब्धस्य निश्चितबलाधानमर्थद्वैधस्य संशयच्छेदनमेकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्माद् बुद्धिवृद्धैः सार्द्धमध्यासीत मन्त्रम्।

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः ॥

एतन्मन्त्रज्ञानं नैतन्मर्न्त्ररक्षणमिति पाराशराः। यदस्य कार्यमभिप्रेतं तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्।

---

१ . रो जानीयुस्तत्राप्यारब्धं कृतमेव वा। आरब्धं निवेदितं कृतमितरे जानन्ति। यथा राजा जनपदान्ते स्वनिहितं ध्रुवं निधिं खानयन् भृते—स यत्नमत्र कूप इति। तत्र विवेकिनो नेदं कूपस्थानमवश्यमत्र ... . कनककलशादर्शनात्।

२ प्रत्यक्षागमानुमानप्रमाणत्रयेण राज्ञो व्यवहार एतदेव दर्शयन्नाह।

३ अप्रतीतस्याप्तवचनादेव ज्ञानम्।

४ उपलब्धस्यापि प्रत्यक्षेण। तत्राभासभूयस्त्वे प्रत्यक्षाभासविप्रलब्धत्वान्निश्चये बलं न भवति। तद्बलाधानमपि मन्त्रिसाध्यम्। ते हि निरपवादैः स्वमतिविभवैः पूर्वपक्षमुत्थाप्य सिद्धान्तप्रदर्शनाद्राज्ञोपलब्धस्य निश्चितबलाधानं कुर्वन्ति।

५ कार्यद्वैधे मन्त्रिण एव दृष्टयुक्तिभिः संशयच्छेदः।

६ एकोऽवयवो राज्ञा दृष्टो यस्य कार्यस्याशेषावयवानां तु मन्त्रिभिरुपलब्धिः क्रियते। तद्यथा सन्धिविग्रहयोस्तुल्यायां वृद्धौ सन्धिः श्रेयान्। विग्रहे हि क्षयव्ययप्रवासो भवति। इति राज्ञोपलब्धम्। तत्र मन्त्रिणो विशेषं दर्शयन्ति। सन्धिरपि भेदपूर्वः श्रेयान् न विग्रहपूर्व इति शेषोपलब्धिरेवम्विधा मन्त्रिसाध्या ॥

७ एवं हि पाण्डित्यं भवतीति भावः। उक्तं च—
शृण्वन्नुन्मत्तादपि जल्पतो गच्छतः स्वपतोऽपि वा। सर्वस्मात्सारमादेयं धातुभ्य इव काञ्चनमिति ॥

८ बहुश्रोतृगतत्वात्।

९ तत्समानमभ्यारोपितं कृत्वा मन्त्रिणः पृच्छेत्।

---

1 SJG तस्मान्नास्य परे विद्यु । 2 SJG अरब्धारस्तु । 3 SJ निश्चय G निश्चयो निश्चितस्य । 4 SJG °मासीत । 5 SJ °म्बरय । 6 S पराशर JG पाराशरा । 7 SJG पृच्छेदु पुस्तकेषु 'पृच्छेद्' इत्यनन्तरं 'कार्यमिदमेवमासीदेव वा यदि भवेत् तत्कथं कर्तव्यमिति। ते यथा ब्रूयुस्तत्कुर्याद्। एवं मन्त्रोपलब्धिः संवृतिश्च भवतीति। इति पठ्यते।

नेति पिशुनः । मन्त्रिणो हि व्यवहितमर्थं[1] वृत्तमवृत्तं वा पृष्टा अनादरेण[2] ब्रुवन्ति प्रकाशयन्ति वा सदोषाः[3] । तस्मात्कर्मसु ये ये [२४ प्र.] ऽभिप्रेतास्तैः सह मन्त्रयेत् । तैर्मन्त्रयमाणो मन्त्रसिद्धिं गुप्तिं च लभते[6] ।

नेति कौटल्यः । अनवस्था ह्येषा । मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेतेति[6] ।

मन्त्रयमाणो ह्येकेनार्थकृच्छ्रे[7] निश्चयं नाधिगच्छेत् । एकश्च मन्त्री यथेष्टमनवग्रहश्चरति[8] ।

द्वाभ्यां मन्त्रयमाणो[9] विगृहीताभ्यां विनाश्यते । संहताभ्यामवगृह्यते[9] ।

[10]तत् त्रिषु चतुर्षु वा कृच्छ्रेणोपपद्यते । महादोषमुपपन्नं[11] तु भवति । ततः परेषु कृच्छ्रेणार्थनिश्चयो गम्यते मन्त्रो वा रक्ष्यते ।

देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत्[12] ।

१ देशकालतुल्यादिभिः ।
२ कार्यम् ।
३ नैतस्यास्ति कार्यमिति न सम्यक् परामर्शपूर्वकं कथयन्ति ।
४ *
५ दुर्गसन्ध्यादिषु ये मुख्याः स्थपतिदूतादयः अभिप्रेता योग्यताप्रदर्शनेन ।
६ विस्तृताः टिप्पन्याः पृष्ठाभ्यां वाक्यानि पठ्यन्ते—"भारद्वाजमते.... गुप्तिमात्रमेव । असिद्धस्य च गुप्तिर्वृथा । विशालाक्षमते मंत्रसिद्धिरस्ति । न गुप्ति...... । पिशुनमतेऽपि कार्यानेकत्वाद्नियुक्तपुरुषानेकत्वम् । न च सर्वे मंत्रिणो भवंति । मंत्रिगुणाभावस्य मंत्रोपलब्धिरनुपलब्धस्य किं रक्षया नियतमंत्र्यभावे परेषां...... । एवं मंत्रस्यानवस्थानात् मंत्रि.........मनवस्थाप्रतिषेधार्थमाह ।
७ कार्यघटने ( ? ) ।
८ निरंकुशश्चरति राज्यमाक्रम्य भुंक्ते । बुद्ध्या चित्तविकारे सति राज्यमपि गृह्णातीति भावः । कौटल्यः न । व्यभिचार इति चेन्न वाग्विधाना निरवग्रहाणामसंभवात् ।
९ परस्परभेदाद्विवादेन......निश्चयाभावाद् विनाश्यते मंत्रमूलत्वात्सर्वारंभाणाम् ।
१० यदिति एकमंत्रित्वे मंत्रनिश्चयानधिगमो यथेष्टाचरणं द्विमंत्रित्वे संहत्यत्वेन विग्रहो विगृहीतत्वेन विनाशनमित्येतद्दोषचतुष्टयम् । कृच्छ्रेणोपपद्यते । बहूनामेकमत्यस्य दुर्घटत्वात् । यदि तु काकतालीयत्वादुपपन्नं तदा तु ......महान्त एव दोषा भवन्तीत्यर्थः ।
११ प्रकीर्णत्वोपपत्त्यात् ।
१२ मंत्रे सामर्थ्यं षाड्गुण्यप्रयुक्ता निरतिशया प्रज्ञा लोकव्यवहारकौशलं च । तथा च राक्षसस्य मंत्रिदोषा न प्रभवंत्युक्तं च—दोषवंतोऽप्यदोषत्वं विदुषो यांति मंत्रिणः ।
सद्दोषैरपि दीप्तानि राज्य............ ॥

कर्म्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागौ[1] विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः ।

तानेकैकशः पृच्छेत् सम[२४ द्वि.]स्तांश्च हेतुभिश्चैषां मतिप्रविवेकान् विद्यात् ।

अवाप्तार्थः कालं[2] नातिक्रामेत् । न दीर्घकालं मन्त्रयेत्[3] ।

न[4] तेषां पक्षीयैर्येषामपकुर्यात् ।

मन्त्रिपरिषदं द्वादशामात्यां कुर्वीतेति मानवाः । षोडशेति बार्हस्पत्याः । विंशतिमित्यौशनसाः । यथासामर्थ्यमिति कौटल्यः ।

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः । अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं नियोगसम्पदं च कर्मणां कुर्युः ।

आनासन्नैस्सह पत्रसंप्रेष[२५ म.]णेन मन्त्रयेत् । आसन्नैः सह कार्याणि पश्येत् ।

इन्द्रस्य हि मंत्रिपरिषद् ऋषीणां सहस्रं स तच्चक्षुस्तस्मादिन्द्रं[11] सहस्राक्षमाहुः ।

---

१ तन्मतिभिरात्ममतिशोधनार्थं च । उक्तं च–

आदायादाय मंत्रिभ्यो ज्ञानं ज्ञानेन शोधयेत् ।
पीतमापमनेनैव तोयं तोयेन बुद्धिमानिति ॥

२ कालातिपाती हि कार्यरसं पिबतीत्युक्तेः ।

३ मंत्रभेदभयात् ।

४ दुर्योधनः पाण्डवपक्षपातिना विदुरेणेव ।

५ अभिहितमंत्रिव्यतिकरेण मंत्रिपरिषदपि कर्तव्येत्याह । तत्र संख्यां प्रत्याचार्यविप्रतिपत्तिः ।

६ द्वादशात्मकमंडलचरितनिरूपणाय ।

७ अरिविजिगीषु मध्यमोदासीनेषु । एकेन निर्गुणमशक्यत्वादादरार्थं च द्वौ द्वाविति मन्यते ।

८ आदरनिरूप्ये मंडलचतुष्टये मंत्रित्रयं कृत्वा विंशतिमिति ।

९ यदि दुरपाकूनये कार्यं दृष्टुं समर्थस्तदा सहस्रमंत्रिपरिकल्पितां परिषद् कुर्यादिति भाव । मन्त्रिपरिषद्विधेयमाह ।

१० स्वपक्षं स्वमंडलं परपक्षमित्राश्रय...... इत्याद्युपक्षोपग्रहयाड्गुण्योपदेशादिना तथा ।

११ पुरुषबाहुल्यम् ।

१२ कार्याद्व्यवहितैः पत्रसंप्रेषणेन कार्यप्रेरणपुरःसरणेन...... ।

१३ पारिषदैः सह कार्याणि संप्राप्तागतानि निरूपयेत् ।

१४ अनेनैतदभिहितं भवति । यथा राजा शास्त्रचक्षुश्चारचक्षुरेवं मंत्रिचक्षुरपि भवति ।

---

1 SJG विभाग. । 2 J एकैकं मतं प्रविशेद्विद्वान् । 3 SJG कालयेत् । 4 SJG मन्त्रयेत । 5 S च तेषां; J च तेषां च, G न च तेषां । 6 S पक्षै., SVl G पक्ष्यै-, J रक्षेत् । 7 SJG मन्त्रयेत । 8 SVl अनासन्नैः । 9 SJG आसन्नैस्सह कार्याणि पश्येत् । अनासन्नैस्सह पत्रसंप्रेषणेन मन्त्रयेत । 10 S 'स' नास्ति । 11 SJG इन्द्रं । 12 SJG इन्द्रं सहस्रा° ।

आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाहूय ब्रूयात्। तत्र यद्भूयिष्ठा ब्रूयुः कार्यसिद्धिकरं च तत्कुर्यात्।

नास्य गुह्यं परे विद्युच्छिद्रं विद्यात्परस्य च।
गूहेत्कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति।
एवमश्रुतशास्त्रार्थो न मंत्रं श्रोतुमर्हति॥

तथा च बृहस्पतिः–

अनधीत्य हि [२५ द्वि०] शास्त्राणि बहवः पशुबुद्धयः।
प्रागल्भ्याद्वक्तुमिच्छंति मंत्रेष्वभ्यंतरीकृताः॥
अनर्थविदुषां तेषां श्रोतव्यं नहि भाषितम्।
अर्थतत्त्वमविज्ञाय विपुलं श्रेय इच्छता॥

इति विनयाधिकारिके पञ्चदशोऽध्यायः॥

*

## [ दूतप्रणिधिः। ]

उद्धृतमन्त्रो दूतप्रणिधिः। अमात्यसम्पदोपेतो निसृष्टार्थः। पादगुण-

१ विनाशोन्मुखे।
२ विवृतमिति शेषः।
३ कुर्वंतश्चेत्युत्तरेण संबंधः।
४ पूर्वोक्तपक्षुत्रयेण।
५ परारात् आत्मनश्च परस्य प्रहर्तुमात्मनो निगूहनार्थम्।
६ आत्मन इति मंत्र एवात्मा राज्ञ।
७ श्रोत्रियाणाम्।
८ अनधीतनीतिशास्त्रः।
९ दुनोति शत्रु स्वामुष्ठानेनेति दूतस्तस्य प्रणिधानं स्वव्यापारे स्थापनं दूत एव वा प्रणिधिः। प्रणिधिशब्दस्य चरपर्यायत्वात्। शत्रुदूतोऽ......नापि ज्ञातव्य इति। गृहीतो मन्त्राधिकारात्। मंत्रो येन स प्रतिष्ठेति संबंधः।
१० ज्ञानपदादिसंपन्नचित्तादिगुणपरिकल्पितया अपेतो युक्तः।
११ निसृष्ट उत्सृष्टो नियमाभावात्संधिविग्रहादिको अर्थो यस्य।

हीनः परिमितार्थः । अर्धगुणहीनः शासनहरः । सुप्रतिविहितयानवाहनपुरुषपरिवापः [२९ अ.] प्रतिष्ठेत ।

शासनमेवं वाच्यः परः स वक्ष्यत्येवं तस्येदं प्रतिवाक्यमेवमतिसन्धातव्यमित्यधीयानो गच्छेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेत् । अनीकस्थानयुद्धप्रतिग्रहापसारभूमीरात्मनः परस्य वावेक्षेत । दुर्गराष्ट्रप्रमाणं सा-

---

१ अस्मात् येष पशात् पेत्य मेध्यापांन् पेत्य आपितुम् ।
यथदस्मद्धितं कार्यं तसद्वाच्यः सुयोधन इति ॥

अत्र वचनमर्थश्चानियतः । संधिर्विग्रहो वा कर्तव्य इति परिमितो नियतोऽर्थो यस्य । वचनानां त्वनियमः ।

२ अपरसंश्रिनष्टाप्यतेति संधानाद्दयतेऽनेनेति शासनं स्वामिसंदेशः । तं हरतीति चित्तस्थं पत्रस्थं वा । अत्र वचनार्थयोर्नियमः ।

३ शिबिकादि ।

४ हस्त्यश्वादि ।

५ पीठमुख्या आयुधीयाः पुरुषाः ।

६ पटकुटीच्छत्रासनाद्यादिः परीवापः ।

७ गच्छतस्तस्यानुष्ठानमाह ।

८ निसृष्टार्थोऽपि स्वमतिपरिकल्पितमुत्तरोत्तरवाक्यं अत एव शासनमिति नात्र लेखो गृह्यते । एवमिति हृदयस्थान् बहून् वचनक्रमान् सूचयति । परिमितार्थोऽपि स्वमतिपरिकल्पितानामेवार्थानामनतिक्रमेण । शासनहरस्तु यथा संदिष्टं वाच्यः परः ।

९ शत्रोरिति शेषः ।

१० अभ्यासस्योत्कर्षग्रहणार्थं यात्रासौकर्यार्थमाह । अटवी = तरस्थाः ।

११ स्वपरमण्डलान्तरालवर्तिनोऽन्तपालाः ।

१२ स्वपरजनपदान्तस्थाः पुरमुख्याः नागरिकादयः ।

१३ ग्रामकूटमहत्तरादयो राष्ट्रमुख्याः ।

१४ चकारात् श्रेणिमुख्यादयः । स्वकीयैः परोपजापरक्षणार्थं परकीयैरनिष्टप्रतिविधानार्थं यात्रासौकर्यार्थं च ।

१५ स्कन्धावारनिवेशभूमिः ।

१६ स्वबलानुकूला ।

१७ 'द्विशते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे' इति तस्य भूमिः ।

१८ कलत्रस्थानं अपसारः ।

१९ स्वस्वामिनः ।

२० शत्रोः ।

२१ अनुकूलानामात्मना प्रतिग्रहार्थं परभूमीनां च छिद्रप्रदेशज्ञानार्थम् ।

२२ ग्रहणार्थं तदनुरू(रू?)पचकोपादानार्थं च ।

२३ परस्य तदनुरूपकोशपरिच्छित्त्यर्थं लाभे चोत्तमस्य प्रतिग्रहार्थं राष्ट्रप्रमाणम् ।

२४ ससारेष्वपि वरसारभूतम् ।

---

1 SVl J वाच्यम् । 2 SAG चावेक्षेत ।

स्वं[1]वृत्ति[2]गुप्ति[3]च्छिद्राणि चोपलभेत। पराधिष्ठानमनुज्ञातः[4] प्रविशेत्। शासनं[5] च यथोक्तं ब्रूयात्। प्राणाबाधे[6]ऽपि दृष्टे पर[२६ द्वि.]स्य वाचि वक्त्रे दृष्ट्यां च प्रसादं[7] वाक्यपूजनमिष्टपरिप्रश्नं[8] गुणकथासंगमासन्नमासनं[9] सत्कारमिष्टेषु[10] स्मरणं विश्वासगमनं[11] च लक्षयेत्तुष्टस्य विपरीतमतुष्टस्य[12]।

तं[13] ब्रूयात् दूतमुखा हि राजानस्त्वं[14] चान्ये[15] च तस्मादुद्यतेष्वपि शस्त्रेषु यथोक्तं[16] वक्तारो दूताः। तेषामन्तावसायिनोऽप्यवध्याः। किमङ्ग पुनर्ब्राह्मणाः[17]। परस्यैतद्वाक्यमेष दूतधर्म इति[18]।

[19]वसेदवि[सृ]ष्टः[20]। पूजया[21] नोत्सिक्तः। परेषु[22] बलित्वं[23] न

१ कृष्यादीनां येन वर्तते। तन्निरोधार्थम्।
२ गुप्तिं रक्षाम्।
३ रक्षाशैथिल्यं व्यसनादि वा छिद्रम्।
४ अनुज्ञात इति वर्तते।
५ शास्त्रेण स्वामिना वा।
६ आत्मनो विनाशेऽपि दृष्टे।
७ प्राणाबाधश्चानागतोऽमिंगितादिभिर्दृश्यते। तावत्तुष्टेरिंगितमाह।
८ दूतवाक्यमस्य साधूक्तमिति।
९ दूतस्य दूतस्वामिनो वा।
१० इष्टेषु परस्य संबन्धेषु दूतस्य स्मरणम्।
११ गुह्यात्मदानादि।
१२ विपर्ययात्मना तंत्रयुक्तिरियम्।
१३ तं अतुष्टं प्राणाबाधपरिहारार्थं ब्रूयात्।
१४ न केवलमहमत्स्वाम्येव त्वं च।
१५ भूतमविप्यवर्तमाना राजानः।
१६ स्वामिनेति शेषः।
१७ अब्राह्मणोऽपि ब्राह्मणसमो दूतो द्रष्टव्यः। अब्राह्मणस्य च दूतत्वमाप्तिः वक्ष्यमाणात्प्रतिषेधात्। उक्तं च मनुना—यथोक्तवादिनं दूतं क्षत्रधर्ममनुस्मरन्।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुरिति॥
१८ परस्यैतद्वाक्यमेव दूतधर्म इति। परस्य विजिगीषोरेतद्वाक्यं न मया स्वेपादभिधीयते इति भावः। तत्त्वं किमिति ब्रूषे एवं चेत् एष दूतस्य धर्मः।
१९ दूतसमाचारमाह।
२० परेणेति शेषः।
२१ परकृतया।
२२ दुर्बलेष्वपि।
२३ स्वामिबलाद्वात्मबलाद्वा बलवानिति चापलादर्पं न ब्रूयादित्यर्थः।

1 J °मिष्टेऽनुसरणं। 2 svl Gvl दूतमुखेन राजान°। 3 SJG वै। 4 S °दुद्यते, svl °द्यते। 5 SJG वक्तारस्तेषां। 6 svl Gvl °मन्तेवासिनो। 7 S अङ्गः। 8 svl °दवसृष्टः। 9 SJ अपूजया, svl पूजया।

मन्येत । वाक्यमनिष्टं सहेत । स्त्रियः पानं च वर्जयेत् । [२७७.] एकः शयीत । सुप्तमत्तयोर्हि भावज्ञानं दृष्टम् । कृत्यपक्षोपजापमकृत्यपक्षे गूढप्रणिधानं रागापरागौ भर्तरि । रन्ध्रं च प्रकृतीनां सिद्धतापसवैदेहकव्यञ्जनाभ्यामुपलभेत । तयोरन्तेवासिभिश्चिकित्सकपाषंडव्यञ्जनोभयवेतनैर्वा । तेषामसम्भाषायां याचनकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थानदेवगृहचित्रलेख्यसंज्ञाभिर्वा चारमुपलभेत । उपलब्धस्य उपजापमुपेयात् । परेण चोक्तः स्वासां प्रकृतीनां प्रमाणं नाचक्षीत । सर्वं वेद भवानिति ब्रूयात् । कार्यसिद्धिकरं वा ब्रूयात् कार्यस्यासिद्धावुपरुध्यमानस्तर्कयेत् ।

१ उक्तं च—वासुदेवसहायोपि यो हतो हत एव सः ।
२ परेणोक्तमिति शेषः ।
३ भूतकार्यसिध्यर्थम् ।
४ प्रमादसंप्रभेदयोः प्रतिषेधार्थम् ।
५ चित्त..........मंत्रस्य ।
६ अन्यथ ।
७ उक्तेन न्यायेन ।
८ कृत्यतापादनार्थम् ।
९ अनुरक्तानां..........नार्थम् ।
१० विरक्तानां स्वीकरणार्थम् ।
११ छिद्रम् ।
१२ तासामेव । परेति शेषः ।
१३ तयोरेव ।
१४ असंभाषायां शत्रुकृतनिषेधात् ।
१५ कृपक ।
१६ शालादि ।
१७ तेषु सर्वसाधारणत्वात् ।
१८ अक्षराणाम् ।
१९ शरीरविन्यासकल्पितया संज्ञया ।
२० कृत्यपक्षमुद्दिश्य ।
२१ मंत्र्यादीनाम् ।
२२ चारचक्षुः ।
२३ सप्रशंसम् ।
२४ अधिके न्यूने वा प्रकृतिप्रमाणे कथिते कार्यसिद्धिं यदि पश्यति तथा ब्रूयात् ।
२५ उपरोधकारणान्युद्भावयेत् ।

1 J मन्येत् । 2 svl रागोप° । 3 SJG 'सिद्ध' नास्ति । 4 SJG याचक । 5 svl Gvl विचित्र । 6 SJG परिमाणं । 7 SJG 'ब्रूयात्' नास्ति ।

किं भर्तुर्मे व्यसनमासन्नं [२७द्वि.] पश्यति । स्वं वा व्यसनं प्रतिकर्तुकामः पार्ष्णिग्राहमासारमन्तःकोपमाटविकं वा समुत्थापयितुकामो मित्रं वा व्याघातयितुकामः । स्वं वा परतो विग्रहमाटविकं वा प्रतिकर्तुकामः । संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः । सस्यपण्यकुप्यसङ्ग्रहं दुर्गकर्म बलसमुद्दानं वा कर्तुकामः । स्वसैन्यानां वा व्यायामस्य देशकालावकाङ्क्षमाणः । परिभवप्रमादाभ्यां वा संसर्गानुबन्धार्थी वा मामुपरुणद्धीति ज्ञात्वा वसेदपसरेद्वा । प्रयोजनमिष्टमुपेक्षेत शासनमनिष्टमुक्त्वा वा वधबन्धभयाद् । अविसृष्टोऽप्यपगच्छेत् अन्यथा नियम्येत ।

१ यथा—किं भर्तुरित्यादि । २ दैवं मानुषं वा ।
३ तद्विधमेव । ४ यात्राविधानाय ।
५ पार्ष्णिग्राहमिमं वा ससाहाय्यदानाय ।
६ अमात्ययुवराजादिकम् ।
७ प्रचंडम् ।
८ मित्रमिति अस्मद्भर्तुरन्तर्गतं आक्रंदं वा मित्रमित्रम् ।
९ अयं शत्रुः स्वकीयं वा । १० अन्यत. ।
११ अंतःकोपादिकम् ।
१२ क्षेत्रक्षारलवणादि ।
१३ काष्ठतृणलोहादि ।
१४ भग्नस्फुटितसंस्कारम् ।
१५ विक्षिप्तानि बलान्येकत्र कर्तुकामः ।
१६ युद्धार्थभयानुकूलः ।
१७ कोयं कस्यायं येन संप्रेषयामि ।
१८ इन्द्रियार्थप्रसक्तिः प्रमादस्ताभ्याम् ।
१९ संसर्गो यौनः संबंधः । यतो द्वयोश्चित्तसंश्लेष ।
२० तेनानुबंध उभयसंततिसंबंधस्तदर्थी ।
२१ कुलपक्षोपग्रहादिके ज्ञात्वा स्वस्योपरोधं वसेत् ।
२२ दूषणप्रतिकारात् ।
२३ *
२४ उपलब्धस्य घातस्य शासनैः ।
२५ यदि स्वाभिहितं कार्यं पश्येत् संसर्गानुबंधार्थिन्यं परिभवप्रमादाभ्यामुपरोधे यदि स्वस्वामिनः कालयापनमनुकूलमुपकारणे· प्रतिकूलं शत्रोस्तदा.........
२६ अनपसरणे ।
२७ वधबंध......... ।

1 sJG पश्यन् । 2 sJG °महागार° । 3 sJG °मारावराबन्त कोप° । 4 sJGs | °आक्रन्दौ च, G आक्रन्दं वा । 5 sJG स्वापद° । 6 sJG °मन्तःकोपमाटविकं । 7 sJG °प्रत्यागत । 8 sJG मनुष्यान°, s. | °ज°; G. | °ग° । 9 sJG स्वदेशं । 10 G यतः° । 11 s °प्रवेशेन वा, s | JG °प्रवेशेन वा । 12 sJG च यावन° । 13 sJG मंथय, J. | मंत्रय । 14 s °दर्शि विमृशो, s | °दर्शिनो । 15 sJ स्वनापदेश° । 16 s | विसृष्टे ।

[1]प्रेषणं सन्धिपालत्वं[2] प्रतापो[3] मित्रसङ्ग्रहः[4] ।
[5]उपजापः सुहृद्भेदो [6]गूढदण्डातिसारणम्[7] ॥
बन्धुरत्नापहरणं[8] चारज्ञानं[9] पराक्रमः[10] ।
[11]समाधिमोक्षो दूतस्य[12] कर्मयोगस्य चाश्रयः[13] ॥
स्वदूतैः कारयेदेतत्[14] परदूतांश्च [२८ प्र.] रक्षयेत्[15] ।
[16]प्रतिदूतावसर्पाभ्यां[17] दृश्यादृश्यैश्च [18]रक्षिभिः[19] ॥
इति विनयाधिकारिके षोडशोऽध्यायः[3] ॥

*

## [ राजपुत्ररक्षणम् । ]

रक्षितो राजा राज्यं[20] रक्षत्यासन्नेभ्यः[21] [4]परेभ्यश्च[22] । पूर्वं[23] दारेभ्यः[24] पुत्रेभ्यश्च ।

---

१ दूतकर्मोक्तानुक्तं वार्तिकश्लोकेनाह ।
२ *
३ *
४ *
५ *
६ *
७ गूढानां पुरुषाणां दंडस्य चतुरंगबलस्य गूढं अतिसारणम् । अन्यापदेशैश्छिद्रच्छदे कर्पास-गोण्यंतर्गतदंडस्येव ।
८ शत्रुबंधः ।
९ *
१० *
११ परमंडलवृत्तांतः ।
१२ परेषां सात्वतादिबभाद्राक्रमणम् ।
१३ *
१४ तदेतत् ।
१५ *
१६ *
१७ *
१८ दूते अभ्यागते यः संप्रेष्यते स प्रतिदूतः । अवसर्पो गूढ......... ।
१९ दृश्या रक्षिणो विजिगीषुनियुक्ताश्चोरादिरक्षणार्थम् । अदृश्याः कुड्यांतर्हिता गूढपुरुषा....... ।
२० राज्ञो राज्यं स्यात् परिरक्षितम् । तदभावे हि संकीर्णं जगत् स्यादधरोत्तरम् ।
२१ आसन्नशब्दस्तरतमपर्यंतो ग्राह्यः । तेनासन्ना मंत्र्यादयः । आसन्नतराः पुत्रभ्रात्रादयः । आसन्नतमाः दाराः । तेभ्यो रक्षितः ।
२२ परेभ्यश्चेति । सामंताटविकादिद्विपदचतुष्पदस्थावरजंगमेभ्यश्च ।
२३ अरिभयादासन्नेभ्यो रक्षा प्रागभिधेयेत्याह पूर्वं दा० ।
२४ आसन्नतमेभ्यः ।

---

1 G दण्डगूढ । 2 ध्रुG दूतापसर्पां° । 3 s दूतप्रणिधि. षोडशो°; ब प्रथमेऽधिकरणे दूत° षोडशो; G प्रथमाधिकरणे षोडशो° दूत° । 4 svl Gvl छानेभ्यश्च ।

दौररक्षणं[1] तु निशान्तप्रणिधौ वक्ष्यामः ।

पुत्ररक्षणं तु जन्मप्रभृति राजा पुत्रान् रक्षेदिति[2] सिद्धान्तः । जन्मप्रभृति[3] राजपुत्रान् रक्षेत् । कर्कटकसधर्माणो हि जनकभक्षा राजपुत्राः ।

तेषामजातस्नेहे[8] पितर्युपांशुदण्डः श्रेयानिति भारद्वाजः ।

नृशंसमदुष्टवधः क्षत्रबीजविनाशश्चेति विशालाक्षः । तस्मादेकस्थाना[11]वरोधश्श्रेयानिति ।

अहिभयमेतदिति पराशराः । कुमारो हि विक्रमभयान्मां पितावरुणद्धीति[12] ज्ञात्वा तदेवाङ्के[14] कुर्यात् तस्मादन्तपालदुर्गे वासः श्रेयानिति ।

औरभ्रं[16] भयमेतदिति पिशुनः । प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वाऽन्तपालसखः स्यात्[17] [२८ द्वि.] तस्मात् स्वविषयादपकृष्टे[18] सामन्तदुर्गे वासः श्रेयान्[10] ।

१ तथापि विशेषः ।

२ जन्म च द्विविधमिष्यते । आधानं सूतिश्चेति । आधानात्प्रभृति राजा कौटि(ट)ल्येनेष्यते । प्रसूतितो भारद्वाजादिभिः ।

३ तत्र भारद्वाजमतमाह ।

४ प्रसूतेः प्रभृतिः ।

५ *

६ अथ हेतुमाह ।

७ यथा ते पितरि नापकुर्वंति । यतो मातृबांधवाख्यं प्रतिगृह्यापकुर्वंति । ततस्तद्द्वारेणाप्यपकरोति ।

८ यावत्स्नेहः पितुर्नोत्पद्यते तावदेवोपांशुदंडस्तेषां कर्तव्यः ।

९ यदेयं राजपुत्ररक्षणं नृशंसं कर्म्मैतत् ।

१० अदुष्टवधश्चात्र निषिद्धः ।

११ एकस्मिन्नेव स्थाने यत्र पिता तत्रैवावरोधः । स्वातंत्र्यनिरोधदुष्टसंसर्गादिनिरोध.........

१२ अहिनेवैकस्थाने सता यथा भय तथा सर्पसमानेन छिद्रान्वेषिणा पुत्रेणेति पाराशराः ।

१३ अनुद्धमपि बुद्ध्वा ।

१४ तदेवाहिभयं विनाशलक्षणं अंके समीपे स्थितः कुर्यात् ।

१५ विपर्यासपालनार्थं.........दंडनायकदुर्गे वासस्तेनैवारक्षकेण कुमारस्य श्रेयान् । अहिभयादिति भावः ।

१६ उरभ्रो मेषस्तस्येदमौरभ्रम् । यथाऽपसृत्याभ्येपाहंयं तथा तस्मादपि ।

१७ आसमंतादापतनमापत्तिः प्रतिविपरीता या आपत्तिः प्रत्यापत्तिः । पितुः सकाशादन्यत्र गमनमित्यर्थः । तस्याः प्रत्यापत्तेर्यथहितस्यापनस्य तदेव पूर्वोक्तं विक्रमभयं कारणभूतं ज्ञात्वा । [पाश्चात्यपत्रे* ।]

१८ दूरांतरिते । उरभ्रोऽपि दूरपातः प्रहर्तुमसमर्थो भवतीति भावः ।

1 MG 'तु' नास्ति । 2 MG राज । 3 MG °दिति सिद्धान्त । जन्मप्रभृति राजपुत्रान् रक्षेद्' इति नास्ति । 4 MG °मदुष्टव ; Sरी °मदुष्टं वध- । 5 G 'बीज' नास्ति । 6 MG पाराशरा: । 7 MG दन्द्धि । 8 MG तमेवाङ्के । 9 MG °भ्रं, Sरी °भ्रमं । 10 MG 'श्रेयानिति' ।

वत्सस्थानमेतदिति कौणपदन्तः । वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात् । तस्मान्मातृबन्धुषु वासः श्रेयान्[1] ।

ध्वजस्थानमेतदिति वातव्याधिः । तेन हि ध्वजेनादितिकौशिकवदस्य मातृबान्धवा भिक्षेरन् । ग्राम्येषु सुखेष्वेनमवसृजेत् । सुखोपरुद्धा राजपुत्राः पितरं नाभिद्रुह्यन्तीति ।

जीवन्मरणमेतदिति कौटल्यः । काष्ठमिव घुणजग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं भज्येत । तस्मादृतुमत्यां महिष्यां ऋत्विज[ २९ प्र. ] श्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः । आपन्नसत्त्वायाः कौमारभृत्ये गर्भकर्मणि प्रसवे[12] च वियतेत । प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात् । समर्थं तद्विदो[16] विनयेयुः ।

---

१ तेन च दुष्टो भूत्वा कुमारसहायोऽभियुंज्यादिति भावः ।

२ मातुलादिषु । ते ह्यस्य पितरं स्वापत्यवैधव्यभयान्नातिद्रुह्यन्तीति भावः ।

३ तदेव व्याचक्षते । तेन ध्वजेन कुमारेण ।

४ ध्वजचिन्हं नागराजादीनां तत्स्थानसमानमेतत् ।

५ अदितिग्रहणमदितिपुत्राणां कालादिदेवानां परिग्रहार्थम् । कौशिकस्त्वाहितुंडिकः कोशेन सर्पं प्रदेश चरतीति । अदितिवदेवध्वजं दर्शयित्वा । तद्यथा । पणमहेत्यादिः कौशिको भिक्षते । योऽस्य नागस्य पूजा करोति तस्य सकुलस्य कुशलमकुशलमन्येषामिति निग्रहभयमनुग्रहाशां च.........कुनीः कर्पयित्वा तेनोपचयं कृत्वा मातृबांधवा अभिद्रुह्यंतीति भावः ।

६ ग्राम्यशब्देन शब्दस्पर्शरूपरसगंधाभिधाना विषया आख्याः । ग्रामाणां साधूनि ग्राम्याणि विषयसुखानीत्यर्थः ।

७ निरंकुशमिति शेषः ।

८ परेणेति शेषः ।

९ भगागतमेव कृतकोष्ठशुध्यां शालिघृतक्षीरपथ्याहारायां राज्यां ऋत्विजः ।

१० इन्द्रो बृहस्पतिश्च देवता अस्येति ।

११ कुमारभृतये साधु कौमारभृत्यं वाल्वेयं हिरण्याक्षीयं जीवकीयं वा यो वेत्ति स वाल्वेयो गर्भकर्मणि गर्भ.........

१२ प्रसवे सुखप्रसूतौ च यत्नं कुर्यात् । एतेन राजपुत्ररक्षा भवति । तथा चोक्तं—
.........त्वग्र योनौ च गर्भे कर्मणि चापि यः ।
शुचिः कृच्छ्रगतस्यापि न शपे रमतेऽस्य धीः ॥

१३ प्रसूतायाः ।

१४ जातकर्मादिभिः ।

१५ अध्येतुं योग्यम् ।

१६ लिपिसंख्यानादिसकलराजविद्याविदः ।

सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्। पितरि विक्रम्य राज्यं गृहाणेति[1]। तमन्यः सत्री प्रतिषेधयेदित्याम्भीयाः।

[2]'महादोषमबुद्धबोधनमिति कौटल्यः। नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति[3]। तस्माद्धर्म्यमर्थ्यं चास्योपदिशेत् नाधर्म्यमनर्थ्यं[4] च। सत्रिणस्त्वेनं तव स्मः इति वदन्तः पालयेयुः।

यौवनोत्सेकात् परस्त्रीषु [२९ द्वि.] मनः कुर्वाणमार्याव्यञ्जनाभिरमेध्याभिः शून्यागारेषु रात्रावुद्वेजयेयुः।

मद्यकामं योगपानेनोद्वेजयेयुः।

द्यूतकामं कापटिकैरुद्वेजयेयुः।

मृगयाकामं प्रतिरोधकव्यञ्जनैस्त्रासयेयुः।

पितरि विक्रमबुद्धिं तथेत्यनुप्रविश्य भेदयेयुः।

---

१ विद्याभिर्विनयसम्पन्नो भवेति कुमारचित्तपरीक्षणार्थं आचार्यमतमाह।

२ उक्तं च—अच्छित्वा परमर्माणि अकृत्वा कर्म दुष्करम्।
महत्वा मत्स्यघातीव महतीं नाप्नुयाच्छ्रियम्॥

३ उक्तं च—दोषान् दोषा इति ज्ञात्वा कालेनापि विरज्यति।
कामभूपपतिर्विरतेरक्रुणमद्यमानिनः॥

४ निम्बकल्ककरोमूत्रकर्पूरादिना।

५ तन्मयं भवति।

६ न्यायेनार्थार्जनादि।

७ नाधर्म्यमित्यर्थापत्तेऽपि पुनरुक्तस्तेऽत्यंतनिरोधार्थम्।

८ अनर्थेभ्य रक्षयेयुः।

९ तथेत्यनुप्रविश्य।

१० घटदासीभिः कृतकपटकुलस्त्रीवेषाभिः।

११ अकृतशरीरसंस्काराभिर्निष्पलाण्डुभक्षणावलेपनादिभिर्दुर्गंधाभिः।

१२ तत्पतिपुरुषागमने।

१३ मदनीयविरेचनीयौषधयुक्तपानेन।

१४ पूर्वोक्तगूढपुरुषैर्धूर्ताभिरैर्वाक्पारुष्यदण्डपारुष्याभ्याम्।

१५ उद्वेजनशब्दस्यावृत्तिरतिशयख्यापनार्थम्।

१६ अनुप्रविश्य इति पिशुनोक्तं च—यस्य यस्य हि यो भावस्तस्य तस्य हितं नरः।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्॥
पश्चात् भेदयेयुर्मातापितृकं कुर्युः।

---

1 sJo तदन्य। 2 sv1 त्वाजीय, Jv1 त्वाजयि; cv1 त्वामीमंति। 3 sJo मुद्रितेषु पुस्तकेषु 'भूयादीयन्तरे 'एवमत्र नवबुद्धिर्युच्यते (c °च्येत) तत्र शास्त्रोपदेशमिथ्याभिजानाति' इति पठ्यते। 4 sJo तस्माद्धर्मे। 5 sJo °धर्म°। 6 sJo मनर्थं। 7 sv1 cv1 थंनं। 8 sJo र्याभिरमेध्या°। 9 sv1 cv1 Jv1 °रुद्वेजयति-। 10 sJo पुरुषैरुद्वेजयेयु.।

अप्रार्थनीयोऽयं[1] राजा विपन्ने[2] घातसम्पन्ने नरकपातः संक्रोशः[3] प्रजाभिरेकलोष्टवधश्चेति विरागं वेदयेयुः[4]। [१०-अ] प्रियमेकपुत्रं बध्नीयात्[5]। बहुपुत्रः प्रत्यन्तमन्यविषयं[9] वा प्रेषयेत् यत्र गर्भः[10] पण्यं[11] डिंबो[12] वा न भवेत्।

आत्मसम्पन्नं से(सै)नापत्ये यौवराज्ये वा स्थापयेत्।

बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः[13]।

शिष्यमाणौ[14] धर्मार्थावुपलभते चानुतिष्ठति च बुद्धिमान्।

उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः[15]।

अपायनित्यो[16] धर्मार्थद्वेषी[17] चेति दुर्बुद्धिः।

स यद्येकपुत्रः पुत्रोत्पत्[१०-ब]त्तावस्य प्रयतेत[18]। पुत्रिकापुत्रानुत्पादयेद्वा।

वृद्धस्तु[19] व्याधितो वा राजा मातृबन्धुकुल्यगुणवत्सामन्तानामन्यत-

१ भेदप्रकारमाह।

२ स्वपिता बलपौरुषसंपन्नत्वात्सुरक्षत्वाच्च योद्धुमशक्य.। रक्षायैविषयेऽपि नैकान्तिकी सिद्धिर्यतो विपन्नेऽस्मिंस्त्वत्फलीभूते घातोऽस्माकं नाश।

३ शरीरसंजननसंवर्धनरक्षणै: पितु परमोपकारित्वात् संक्रोशः।

४ अनुरक्तप्रकृतिश्चाय राजा ततश्च प्र०।

५ पितृवात्सल्यमिति।

६ अथैवमुक्तोऽपि जन्मान्तरवैरानुबंधाद्विपर्येत। तदा विरागं राज्ञे।

७ निगडैरिति दोषः। अन्यथागमनाशंकाभावात्।

८ आटविकविषयम्।

९ परस्य राष्ट्रं मित्रादिविषयम्।

१० गर्भ इव गर्भः पुत्रत्वेन जामातृत्वेन वा न तैर्गृह्यते न प्रद्दश्यं न विकुर्वंते।

११ पण्यवत्पण्यं कृत्वा वा पितृप्रकृतीर्भिक्षित्वा शक्तिमात्मनः पूरयंति।

१२ डमरो डमरकारको यत्र न भवति तं विषय प्रेषयेत्।

१३ बुद्धिवशादेव त्रैविध्यं राजपुत्राणां दर्शयन्नाह। अप्रगुणबुद्धिसंपन्न।

१४ प्रथमस्य लक्षणमाह। गुरुभिरुपदिश्यमानौ।

१५ आचार्यादिभिः प्रतिक्षणमाहार्या बुद्धिर्यस्य। तथैरणयाऽनुष्ठाने प्रवृत्तः इत्यर्थः। यं प्रयत्नेन शिक्षयेत।

१६ अपायहेतुषु कामादिव्यसनेषु नित्यप्रवृत्त।

१७ धर्मद्वेषी नास्तिकत्वात्। अर्थद्वेषी दैवपरत्वात्।

१८ तस्य राज्यायोग्यत्वात्। दुर्बुद्धिनोत्पन्नो दुर्बुद्धिरेव स्यादित्याशंकायाम्-पुत्रिकेत्याद्याह। पुत्रत्वेन गृहीतानां दुहितॄणां ब्राह्मणे क्षत्रियैर्वा पुत्रा० तत्पुत्र. पुत्रिकापुत्र इति वचनात्।

१९ क्षीणशुक्रः।

२० क्षेत्रभूताया देव्या ज्ञाति.।

२१ राज्ञ कुलोत्पन्न।

२२ प्रशस्तगुणवदिति सबध्यते।

1 SJG 'च' नास्ति। 2 SJG 'वेदयेयु' नास्ति। 3 SJG वा बध्नीयात्। 4 SJvl पण्यं, Svl पण्य, J पण्डो। 5 S डिम्बा, Svl डिम्बो, Jvl पण्यडिम्बो। 6 SJG सैनापत्ये। 7 SJG शिष्यमाणो। 8 G विपर्येत। 9 S तुल्य, Svl तुल्य।

मेन क्षेत्रे[1] बीजमुत्पादयेत् । न चैकैपुत्रमविनीतं राज्ये स्थापयेत् ।

वहूनामेकसंरोधः पिता पुत्रहितो भवेत् ।
अन्यत्रापद ऐश्वर्यं ज्येष्ठभागि[1] तु पूज्यते ॥
कुलस्य वा भवेद्राज्यं कुलसङ्घो[ ] हि दुर्जयः ।
अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥

॥ इति विनयाधिकारिके सप्तदशमोऽध्यायः ॥ छ ॥

*

## [ अपरुद्धवृत्तम् । ]

विनीतो राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत अन्यत्र प्राणाबाधप्रकृतिकोपपातकेभ्यः ।

पुण्ये कर्मणि[6] नियुक्तः पुरुषमधिष्ठातारं याचेत । पुरुषाधिष्ठितस्तु सविशेषमादेशमनुतिष्ठेत् । अभिरूपं च कर्मफलमौपायनिकं च लाभं पितुरुपनाययेत् ।

---

१ देव्याम् ।
२ राजार्हम् ।
३ आहार्यबुद्धिमपि स्थापयेत् । बुद्धिमतोऽभावे दुर्बुद्धिमेकं न स्थापयेत् । अविनीतस्तु सर्वव्यसनास्पदत्वाद्राज्यमात्मानं च नाशयति ।
४ विरक्तानाम् ।
५ पितुर्हितत्वेऽहितभावाभावात् भिन्नमतत्वात् बहूनां पुत्राणामपि हितो भवेत् । परस्परं सपर्यण विनयग्रहणात् ।
६ यदि कुल्यपाप्यादिका आपन्नवति तदा कनिष्ठभाग्यपि भवति । राज्य पूज्यते न्याय्यत्वात् ।
७ ज्येष्ठस्य भवतीत्यर्थः ।
८ कुलस्येति बहूनामित्यर्थः । सौभ्रात्रत्वे सति रामयुधिष्ठिरादीनामिव राज्यं भवेत् ।
९ भिन्नकुलानामपि ।
१० *
११ *
१२ *
१३ *
१४ यत्र स्वल्पबलो बलीयसि प्रेष्यते विनाशः संपद्यतामिति ।
१५ न्याय्ये समाहर्त्रादौ परीक्षार्थम् ।
१६ *
१७ आदिष्टादधिकैः फलैः सहितम् ।
१८ *
१९ *

---

1 s भागी तु, J भागस्तु, Jvl भागिति । 2 प राजपुत्ररक्षण सप्तदशोऽध्याय, J प्रथमेऽधिकरणे राज° रक्ष°, G नवमाधिकरणे रक्ष° राज° । 3 sJG 'विनीतो' नास्ति । 4 sJG बाधक । 5 svl J कोपक । 6 sJG पुण्यकर्मणि । 7 sJG च । 8 svl Gvl अधिष्ठ ।

तथाऽप्यतुर्ष्यंतमन्यस्मिन् पुत्रे [३१ म.] दारेषु वा स्निह्यंतं तदनुरोधाद्वा द्वेषेणारण्यायापृच्छेत ।

वधबन्धभयाद्वा यस्सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवागविसंवादकः प्रतिग्रहीता मानयिता चाभिपन्नानां तमाश्रयेत् ।

तत्रस्थः कोशदंडसंपन्नः प्रवीरपुरुषकन्यासंबंधम[टवीसम्बन्धं] कृत्यपक्षोपग्रहं च कुर्यात् ।

एकचरः सुवर्णपाकमणिरागरसरूप्यपण्याकरकर्मान्तानाजीवेत् । पापंण्डसङ्घद्रव्यमश्रोत्रियोऽपरभोग्यं वा देवद्रव्यमाढ्यविधवां गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेनातिसंधाय तद् द्रव्यमपहरेत् ।

पारिग्राहिकं वा योगमातिष्ठेत् । मातुः परिजनोपग्रहेण वा चेष्टेत ।

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपापंडछद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखः छिद्रेषु प्रविश्य राज्ञः शस्त्ररसाभ्यां प्रहृत्य ब्रूयादहमसौ कुमारः सहभोग्यमिदं [३१ द्वि.] राज्यमेको नार्हति भोक्तुं ये कामयंते मां भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्यामीत्यपरुद्धवृत्तम् ।

॥ इति विनयाधिकारिकेऽपरुद्धवृत्तं प्रकरणं ॥ छ ॥

---

१ स्वभावद्वेषात् ।
२ अन्यपुत्रदारानुरोधाद्वा अतुष्यंतम् ।
३ अरण्यं तपसे यास्यामीति ।
४ *
५ *
६ *
७ धर्मविजयिन। कुमारस्य कोशोपार्जनोपायमुक्त्वा क्षोभविग्र(चि)तः शोध्यते ।
८ वक्ष्यमाणमदनीयमोहनीययोगैर्देहकव्यंजनहस्तेन धनपतीनतिसंधायापहरेत तेषां धनमित्यर्थः ।
९ दुर्गलंभोपायाभिहितप्रयोगैरव्यापादिभिर्दुर्गसंस्थं द्रव्यमपहरेदित्यर्थः ।
१० आत्मनः शक्त्युपचयं कुर्यात् ।
११ प्रच्छादितपूर्ववर्णवेषादि । चटकपायचातः सहचरकल्कादियः कृष्णो भवतीत्यादिप्रयोगैः ।
१२ कार्वादिव्यंजनानां सखा भूत्वा ।
१३ रक्षारंध्रेष्वेषु ।
१४ पुकलोद्दवधप्रतिषेधार्थम् ।
१५ *

---

1 SJG बन्धवध । 2 S प्रतिगृहीता । 3 SJG °माश्रयेत । 4 S कोदन्ड; SJ कोशदण्ड । 5 S °गृहं । 6 SJG वा । 7 SJ सुपर्णं । 8 SJG द्वेम । 9 SJG श्रोत्रियमोग्यं । 10 G देश । 11 SJ वा गूढं; G विधवाद्रव्यं वा । 12 S पात्रनि । 13 SJ सन्धायापहरेत्, G °पहरेत् । 14 SJG पारग्रामिकं । 15 [illegible] पापण्डच्छद्मं । 16 SJG छिद्रे । 17 SJG तत्र ये । 18 SJG 'मां' नास्ति । 19 S भर्तुं (SJ भर्तुं) आहं (SJ तानहं), J भर्तुं नहं; G भर्तुं तानहं । 20 SJG नोपस्थासे इति । 21 SJG इत्यवरुद्ध । 22 SJG 'इति...प्रकरणं' नास्ति ।

अपरुद्धं[1] तु मुख्यपुत्रापसर्पाः प्रतिपाद्यानयेयुर्माता वा प्रतिगृहीता । त्यक्तं वा गूढपुरुषाः शस्त्ररसाभ्यां हन्युः । अत्यक्तं तुल्यशीलाभिः स्त्रीभिः पानेन मृगयया वा प्रसंजयित्वा रात्रावुपगृह्यानयेयुः ।

उपस्थितं च राज्येन मद्ध्वमिति सान्त्वयेत् ।
एकस्थमथ संरुन्ध्यात् पुत्रवांस्तु प्रवासयेत् ॥

॥ इति विनयाधिकारिके अष्टादशोऽध्यायः ॥ छ ॥[8] [१२ प्र.]

*

## [ राजप्रणिधिः । ]

राजानमुत्थितमनूत्तिष्ठन्ते भृत्याः । प्रमाद्यन्तमनुप्रमाद्यंति । कर्माणि चास्य भक्षयंति द्विषद्भिश्चातिसंधीयते । तस्मादुत्थानमात्मनः कुर्वीत ।

नालिकाभिरहरष्टधा विभज्य रात्रिं च विभजेत् । छायाप्रमाणेन वा ।

१ पूर्वं दुष्टे पितर्यदुष्टस्यापरुद्धस्य वृत्तमभिहितं भविष्यतो राज्ञो रक्षार्थमिदानीं दुष्टेऽपरुद्धे अदुष्टस्य राज्ञो वृत्तिरभिधीयते ।

२ मंत्र्यादिपुत्राख्य एवापसर्पा राज्ञा प्रणिहितत्वात् प्रतिपाद्य वा राज्यमानयेयुः । माता वा तस्य प्रतिग्रहीता राज्ञोपचारैरावर्जिता आनयेत् ।

३ पौष्ट्यावसंधेयम् ।

४ अदुष्टम् ।

५ मापरोक्षे त्वयैव राज्यमिति सान्त्वयेदनुनयेत् बुद्धिमन्तम् । आहार्यबुद्धिं तु एकस्थं निरुद्धसंचारं संरुध्यात् । दुर्बुद्धिं तु पुत्रवांश्चेदन्यस्मिन् योग्ये पुत्रे सति प्रवासयेद् उपांशुवधेन हन्यात् । राज्यरक्षार्थं सावद्यलेशो बहुपुण्यराशिरिति वचनात् ।

६ आसन्नतरेभ्यः पुत्रेभ्यो रक्षणमभिधायास्तत्रेभ्यो मंत्र्यादिभ्यो रक्षाप्रकारमाह ।

७ राजानमुत्थितं स्वव्यापारे सततोद्युक्तं अनूत्तिष्ठन्ते अनन्तरमेवोत्तिष्ठंते स्वव्यापारेषु सततोद्युक्ता भवंति । स यष्टीकण्टकाः प्रकृतय इति वचनात् । उक्तं च—

यत्किंचित्कुरुते राजा शुभं वा यदि वाऽशुभम् ।
भृत्यास्तदनुकुर्वंति नर्तक्यो नर्तकं च [या] ॥

......च भृत्येषु राज्ञो रक्षा संपद्यते । अप्रमत्तो राजा न स्वैः परैश्चातिसंधीयते । एवं स्वतोऽपि रक्षा । प्रमाद्यंत इंद्रियार्थेषु प्रसज्यंतमनुप्रमाद्यंति । उक्तं च—

राजानुग्रीयंते न स्वैः स्वयं कार्येष्वनुत्थितः ।
न दुर्योगोऽस्ति नाराणामनुद्युक्तेश्वरात्मनीनि ॥

ततश्च रक्षाविपर्ययं भवतीति भावः । दोषांतरं च दर्शयति । कर्माणि च । उपधारासमाहर्तारः कर्मणां फलानि चास्य भक्षयंति । राज्ञो निरवधानत्वात् । मन्त्रिणामनेन च कृत्याः परेषां भक्षयन्ति ततश्च प्रमादः । अत एव द्विषद्भिश्चातिसंधीयते । तस्मादुत्थानमुद्योगमात्मरक्षार्थं कुर्वीत । अनुष्ठानार्थं कालविभागार्थमाह ।

1 SJG अवरुद्धं । 2 SJ पुत्र । 3 SJG °मरगर्गा । 4 SJG 'वा' नास्ति । 5 SJG प्रगृह्य राज्ञा° । 6 J मद्ध्यंमिति । 7 SJG वा । 8 S धारशाम्नायाख्ये च इति अन्त°, J प्रथमेऽधिकरणेऽष्टादश° अध्या°; G प्रथमाधिकरणे अष्टा° अध्याय° । 9 SJ ॰नुत्तिष्ठन्ताम्, SG मनुत्थित° । 10 S नाडिका, J नलिका, G नलिका । 11 SJG 'विभज्य' नास्ति । 12 J विभजेत ।

त्रिपौरुषी पौरुषी चतुरंगुला नष्टच्छायो[१] मध्याह्न इति चत्वारः[२] पूर्वे दिवसस्याष्टभागाः ।

{छायापौरुषाभिधानस्य द्वादशांगुलशंकोस्तत्प्रमाणेन वा दिनविभागस्तदेवाह त्रिपौरुषीति । आदित्योदये षण्णवत्यंगुला पौरुषच्छाया भवति । सा यदि त्रिपौरुषी षड्त्रिंशदंगु[३२ द्वि.]लावशिष्यते । तदा पूर्वो दिवसस्याष्टभागो व्यतीतो भवति । यदा पौरुषी द्वादशांगुला तदा द्वितीयोऽष्टभागः । यदा चतुरंगुला तदा तृतीयोऽष्टभागः । यदा शंकुमूलप्रविष्टा च्छाया भवति तदा चतुर्थोऽष्टभागः । नष्टच्छायो मध्यान्ह इति चत्वारः पूर्वेदिवसस्याष्टभागाः ॥ अतिदेशमाह ॥ छ ॥}

तैः पश्चिमा व्याख्याताः । तत्र पूर्वेदिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात् । द्वितीये पौरजानपदानां कार्याणि पश्येत् । तृतीये स्नानभोजनं सेवेत । चतुर्थे हिरण्यप्रतिग्रहम[३२ प्र.]ध्यक्षांश्च कुर्वीत । पञ्चमे मन्त्रिपर्षदा पत्रसंप्रेषणेन मंत्रयेत्, चारगुह्यबोधनीयानि बुद्ध्येत । षष्ठे स्वैरविहारं मंत्रं[११] वा सेवेत । सप्तमे हस्त्यश्वरथायुधीयान् पश्येत् । अष्टमे सेनापतिसखो विक्रमं चिन्तयेत् ।

१ विभक्तादोरात्रे ।

२ नागरिकचदेहूसमाहर्त्रंतपालादिभिः प्रज्ञानां रक्षाविधानं दैवमानुषपीडादि ।

३ अध्यक्षातिसंधाननिवारणार्थम् ।

४ धर्मस्थीयकंटकशोधनोक्तविधिना व्यवहारान् ।

५ व्यायामोपलक्षणार्थम् ।

६ देवपितृतिथिपूजोपलक्षणार्थम् ।

७ समाहर्त्रादिसमानीतहिरण्यस्य स्वस्थचित्तत्वात् कुर्वीत । स्वयं दृष्टस्य न परिवर्तनादि संभवतीति । अध्यक्षबुद्धिसूक्ष्मे दृष्टेऽन्यान् कुर्वीत ।

८ संज्ञाभिः ।

९ न तैः सुखं स्यादिति गीतनृत्तादिनिमित्तं विह........ ।

१० सति कार्योत्थाने ।

११ स्नानभोजनसंमुष्टान् सारफल्गुविभागार्थम् ।

१२ प्रकाशकूटयुद्धव्यूहरचनादिभिः प्रतिदिनं चिन्तितश्च विक्रमः सुश्लिष्टो भवति ।

प्रतिष्ठितेऽहनि सन्ध्यामुपासीत । प्रथमे रात्रिभागे गूढपुरुषान् पश्येत्। द्वितीये स्नानभोजनं सेवेत स्वाध्यायं च कुर्वीत। तृतीये तूर्यघोषेण संविष्टः, चतुर्थपंचमौ शयीत । षष्ठे रात्रिभागे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत् । सप्तमे मन्त्रमध्यासीत गूढपुरुषांश्च [२१ द्वि.] प्रेषयेत् । अष्टमे ऋत्विगाचार्यपुरोहित[सखः] स्वस्त्ययनानि प्रतिगृह्णीयात् । चिकित्सकमहानसिकमौहूर्तिकांश्च पश्येत् । सवत्सां धेनुं वृषभं प्रदक्षिणीकृत्योपस्थानं गच्छेत् ।

आत्मबलानुकूल्येन[11] वा निशाहर्भागान् प्रविभज्य सेवेत ।

उपस्थानगतः कार्यार्थिनामद्वारासंगं कारयेत् । दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते । तेन प्रकृतिकोपमरिवशं वा गच्छेत् । तस्मा-

देवताश्रमपाषंडश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत् । कार्यगौरवादात्ययिकवशेन वा ।

सर्वमात्ययिकं कार्यं श्रुणुयान्नातिपातयेत् ।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वापि जायते ॥ [३४प्र.]
अग्न्यगारगतः कार्यं पश्येद्वैद्यतपस्विनाम् ।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च ॥
तपस्विनां तु कार्याणि त्रैविद्यैस्सह कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥
राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम् ।
दक्षिणा वृत्तिसाम्यं तु दीक्षा तस्याभिषेचनम् ॥

तथा चोक्तम्-

न तपोभिर्व्रतैर्यज्ञैः पुण्यमाप्नोति पार्थिवः ।
संरक्षितप्रजाधर्मात्षष्ठमंशं यथाप्नुवन् ॥
प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां हि प्रियं हितम् ॥

---

१ देवद्रव्यादिनिमित्तो विवादः ।
२ तीर्थतडागादीनाम् ।
३ अप्राप्तव्यवहाराणाम् ।
४ देवताकार्यं प्रथमतः............ ।
५ अत्ययो विनाशो यस्य दृश्यते तदेवादौ पश्येत् ।
६ अनुष्ठानावसानं कुर्यात् ।
७ होमशालास्थितः । अग्निप्रत्यक्षं मायिनः प्रष्टव्या इति ।
८ पंडिततपस्विनामादरख्यापनार्थम् ।
९ पुरोहितोपाध्यायाभ्यां सखा भूत्वा संशयविच्छेदार्थम् ।
१० तेषामभ्यर्हितत्वात् ।
११ स्तंभमोहादिप्रयोगविदाम् ।
१२ कुपिता मूर्खतपस्विनः शापं प्रयच्छन्ति ।
१३ *
१४ अन्यायनिवारणम् ।
१५ रिपौ सुतेऽपि वा शास्त्रोक्तदण्डधारणात् ।
१६ मात्स्यन्यायप्रतिषेधात् ।
१७ इहलोकसिद्धिलक्षण राज्ञो भवति ।
१८ स्वधर्मप्रवर्तने तद्धर्मषडंशावाप्तिः ।
१९ मृगयादिव्यसनं हित राज्ञो उभयलोकविरोधात् ।
२० रक्षानिराकुलत्वम् ।
२१ राज्ञो हितं लोकद्वयसंसिद्धिः ।

---

1 SG वा विजायते, J वाभिजायते. । 2 SJG च । 3 SJG दीक्षितस्याभिषेचनम् । 4 SJG मुद्रितेषु पुस्तकेषु 'तथा चोक्त.........यथाप्नुवन्' नास्ति । 5 SJG J ।

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम् ।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभते चार्थसंपदम् ॥

॥ इति विनयाधिकारिके [ २४ द्वि. ] एकोनविंशतितमोऽध्यायः ॥ छ ॥

*

## [ निशान्तप्रणिधिः । ]

[ *निशान्तप्रणिधिः । ] वास्तुकप्रशस्ते देशे सप्राकारपरीषा(खा)द्वारमनेककक्ष्यापरिगतमंतःपुरं कारयेत् ।

कोशगृहविधानेन मध्ये वासगृहम् । गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वासगृहं कारयेत् । भूमिगृहमासन्नचैत्यदेवतापिधानद्वारमनेकसुरङ्गासञ्चारं वा तस्योपरि प्रासादं वा गूढभित्तिसोपानं शुषिरस्तम्भप्रवेशा-

१ प्रजानां करणीयार्थशिक्षणम् । २ चतुर्विधस्य ।
३ राज्ञोऽनुद्योगे प्रजाभिः प्राप्तस्यार्थस्य विनाशो भवति ।
४ भविष्यतश्चार्थस्य योगलक्षणं फलं राज्ञा प्राप्यते ।
५ अर्थानां पुरुषम् ।
* निशान्तप्रणिधिरिति सूत्रम् । निशाम्यंति निश्चलीभवंत्यत्र राजादयो निशायां अंतो वा यदत्र गम्यते तन्निशान्तमंतःपुरम् । तत्र प्रणिधिः प्रणिधानम् । स्थावरजंगमानां तत्र प्रणिधानं सावधानता । राज्ञ आत्मनो दाराणां च रक्षणार्थमिति सूत्रार्थः । संबंधस्त्विदं स्पष्टमेव दाररक्षणं निशान्तप्रणिधौ प्रवक्ष्याम इति । अत्र द्वारेभ्यो रक्षणं दाराणां चारक्षणमिति । ( इदं सूत्रं मूलभूतपंक्तौ लिखितं नोपलभ्यते । टिप्पणी चेयं पृष्ठपार्श्वभागे लिखिता समुपलभ्यते—सं० )
६ दाराणामात्मनश्च रक्षार्थं गृहरचनां तावदाह—वास्तुका वास्तुविद्याविद्भिः प्रकर्षेण शस्ते ।
७ वक्ष्यमाणलक्षणे कोशगृहम् । तस्य विधानम् । चतुरस्रां वापीं निरुदकोपस्नेहां खानयित्वेति सर्वं योज्यम् । तन्मध्ये वासगृहम् । राज्ञो वासाय शय्यागृहम् । गूढभित्तिसंचारमिति—गूढो भित्तिषु संचारो यस्मिंस्तद्रूपकर्तुः प्रविष्टस्य मोहजननत्वात् मोहनगृहम् । तन्मध्ये वा वासगृहं कारयेत् ।
८ भूमिगृहं वा परैरविदितं तद्गोपनार्थं वा प्रकटराजगृहस्यातः किल देवचैत्य इष्टकाभिश्चीयत इति । भियः सरस्वत्या वा भपनम् । तत्रासन्नचैत्यकाष्ठदेवतैव यंत्रप्रयोगादपिधानद्वारं तद्देवतायतनमिति जनैः प्रतीयते । न भूमिगृहद्वारमिति भावः । अनेकसुरंगासंचारमापद्यपसारार्थं वासगृहं कारयेदिति संबंधः ।
९ अनेकभूमिकं घंटामल्लसारककलशोपेतम् ।
१० भित्तिगर्भविरचितसोपानत्वात् । गूढेत्यादि ।
११ शुषिरस्तंभेत्यादि । शुषिरस्तम्भेषु रचितद्रु(सू)क्ष्मसोपानत्वात् प्रवेशोऽपसारश्च स्तंभमध्येनैव भवति । तद्वासार्थं कारयेत् ।

1 s राजप्रणिधिः एकोनविंशोऽध्यायः; J प्रथमेऽधिकरणे राज० एकोन०; G प्रथमाधिकरणे एकोनविं राज० । 2 SJG °कक्ष्या । 3 SJ 'मध्ये' पतितः; Svl G वा मध्ये वास° । 4 SJG वा वासगृहं । 5 SJG 'कारयेत्' नास्ति । 6 SJG °हं वासन्नचैत्य° । 7 SJ °पिधान । 8 SJG 'वा तस्योपरि' नास्ति । 9 SJG शुषिर° ।

पसारं [३५अ.] वा वासगृहं यन्त्रबद्धतलावपातं कारयेदापत्प्रतीकारार्थम् आपदि कारयेत् । अतोऽन्यथा वा विकल्पयेत् । सहाध्यायिभयात् ।

मानुषेणाग्निना त्रिरपसव्यं परिगतमन्तःपुरमग्निरन्यो न दहति । न चात्रान्योऽग्निर्ज्वलति । वैद्युतेन भस्मना मृत्संयुक्तेनोपलि(लि)प्तं च ।

जीवन्तीश्वेतामुष्ककपुष्पवन्दाकाभिरक्षीवे जातस्याश्वत्थस्य प्रतानेन गुप्तं सर्पा विषाणि वा न [३५ब.] प्रभवंति ।

मयूरपृषतनकुलोत्सर्गः सर्पान् भक्षयंति । शुकसारिके भृङ्गराजो वा सर्पविषशङ्कायां क्रोशंति[10] । क्रौंचो विषाभ्यासे[11] माद्यति ग्लायति जीवंजीवको म्रियते मत्तकोकिलः । चकोरस्याक्षिणी विरज्येते[12] । इत्येवमग्निविषसर्पेभ्यः प्रतिकुर्वीत ।

पृष्ठतः कक्षाविभागे स्त्रीनिवेशो[14] गर्भव्याधिसंस्था वृक्षोदकस्थानं च । बहिः कन्या-कुमारपुरम् । पुरस्तादलङ्कारभूमिर्मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च । कक्षांतरेष्वंन्तर्वंशिकसैन्यं तिष्ठेत् ।

---

१ तलं भूमिकातलोपरि फलकाच्छादितलक्षणं तस्यावपातः शत्रोरुपरि पातः । स यंत्रेणावबद्धो यस्य कार्यकाले कीलापनयनात्पततीति कारयेदिति । राज्ञो वासगृहे यथापूर्वयत्नकरणं आपत्प्रतीकारार्थम् । आपदि वा अविश्वस्ता कारयेत् । पूर्वकृते [illegible] मंत्रभेदः स्यादिति ।

२ मतिविभवैर्विभवं कल्पयेत् । सहाध्यायिनामप्येवमेव शास्त्रे तत्र साधयाना नातिसंघातुं शक्यंते ।

३ मानुषाग्निः शराहतस्य शूलप्रोतस्य वा नरस्य वामपार्श्विकायां क्रमापयेनुनिर्मथनोत्पन्नो मानुषोऽग्निस्त्रिमोल्काख्येण । त्रिरपसव्यं त्रीन् वारान् अप्रदक्षिणेन परिगतं नीराजितमग्निरन्यो न दहति । स एव दहतीति भावः । वक्ष्यति च मानुषेणाग्निना परदुर्गमादीपयेदुरिति ।

४ महानस्त्रीपादादापि ।

५ विद्युद्दग्धस्य वृक्षस्य भस्मना वल्मीकमृदायुतेन करकजलेनार्द्रितेन ।

६ डोडी । ७ गिरिकर्णिका । ८ मुष्कके जातपुष्पोपलक्षितो वंदाकः ।

९ शोभांजने । १० चंदनमालाविरचितेन ।

११ एतेषां निशांते उत्सर्गो मोक्षः सर्पान् भक्षयति एते उत्सृष्टाः सर्पान् भक्षयंतीत्युपचारः ।

१२ कृष्णः शुकप्रमाणः पक्षी ।

१३ मध्यमकक्षावस्थितवासगृहात् पृष्ठतः । १४ सुभगकुलस्त्रीगृहाणि ।

१५ एकतो गर्भिण्यः अन्यतो व्याधिताः । १६ कुमाराणां अध्याक्षाणां च । १७ प्राकारमूलेषु ।

१८ अंतर्वंशो राज्ञः पुरद्वारं यत्र नियुक्तोऽन्तर्वंशिकस्तस्य सैन्यम् ।

अन्तर्गृहगतः स्थ [३६ प्र.] विरस्त्रीपरिशुद्धां देवीं पश्येत्[1] ।

श्रूयते हि[2] देवीगृहे निलीनो[3] भ्राता भद्रसेनं जघान । मातुःशय्यान्तर्गतश्च [4]जननीप्रोत्साहितः कनिष्ठपुत्रदत्तयौवराज्यं कारूषविषयाधिपं धञ्जाख्यं पुत्रो दुर्जयः <जघान इत्युत्तरत्रानुवर्तते[4]> लाजान्मधुना[5] विषेण [6]विपर्यस्य देवी[7] काशिराजम् । विषदिग्धेन नूपुरेण वैरन्त्यम् । मेखलामणिना सौवीरम् । जालूथमादर्शेन । वेण्यां[8] गूढं शस्त्रं कृत्वा देवी [9]विदूरथं जघान । तस्मादेतान्यास्पदानि परिहरेत् ।

मुंडजटिलकुहकप्रतिसंसर्गं वा[३६ द्वि.]ह्याभिश्च दासीभिः प्रतिषेधयेत् । न चैनाः कुल्याः पश्येयुः । अन्यत्र गर्भव्याधिसंस्थाभ्यः[11] । रूपाजीवाः स्नानप्रघर्षशरीराः [13]प्रवर्तितवस्त्रालङ्काराः पश्येयुः । अशीतिकाः पुरुषाः पञ्चाशत्का वा [15]स्त्रियो मातापितृव्यञ्जनाः स्थविरवर्षधराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः स्थापयेयुश्च स्वामिहिते ।

स्वभूमौ च वसेत्सर्वः परभूमौ न सञ्चरेत् ।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ॥
सर्वं[17] चावेक्षितं वस्तु निबद्धागमनिर्गमम् ।
निर्गच्छेदभिगच्छेद्वा मुद्रासंक्रान्तभूमिकम् ॥

॥ इति विनयाधिकारिके निशान्तप्रणिधिः विंशोऽध्यायः ॥

*

१ भद्रसेनस्य । २ भ्रातोक्त्य । ३ अनिच्छन्ती बलादभिगच्छंतम् ।
४ व......धिपं दुष्टपारुष्यातिपीडिता । ५ परंतपं (?)......... ।
६ अयोध्याधिपं स्वभावद्वेषात् कृतावपि अनभिगता कामेन पीडिता ।
७ वृष्णिविषयपतिं मृग्यापहाराद् विद्विष्टा ।
८ वाक्दंडयोश्च पारुष्यमर्यापहरणाक्रमी । अभ्यासक्तिस्तथा द्वेषः स्त्रीभ्यो भर्तुर्भयास्पदम् ॥
९ मायायोगविदः । ते हि मस्याद्युपदेशद्वारेणाति...... ।
१० .........कौशाम्बमालिनीभिः । ११ देवीचित्ताऽविषहनार्थम् ।
१२ देवीनां कुकमयाः स्त्रियो भ्रात्रादयः कुमंत्रनिषेधार्थम् । १३ तत्र न दोषः ।
१४ स्नानोद्वर्तनं.........राजकीयवस्त्रालंकार....... । १५ उपतिष्ठेयुः ।
१६ अंतश्चराणां कृतकमातापितरः राजप्रणिहिता... ।
१७ सावित्र्यादिमहासतीनिदर्शनादिभिः ।
१८ आख्यो वासः संचारोऽपि निषिध्यते । परिचयात् घोरस्तः कुमंत्राः संभवंति ।
१९ सर्वं च सारफल्गु कुप्यादि द्रव्यं अवेक्षितं अंतःपुरद्वारस्थैः†................. ।
(†इये टिप्पनी द्विविपङ्क्तिपरिमिता विस्तृता शाप्यते परं विनष्टाक्षराऽतोऽग्रिमः पाठोऽन्यस्याः ।)

1 SJG पुस्तकेषु पश्येदित्यनन्तरं 'न कश्चिदभिगच्छेत्' इत्यधिकं पठ्यते । 2 SJG 'श्रूयते हि' नास्ति । 3 SJG °लीनो हि भ्राता । 4 SJG पुस्तकेषु 'जननी'त्यारभ्य 'वर्तते' पर्यन्ताः शब्दा नोपलभ्यन्ते । तत्स्थाने 'पुत्र· कारूश'मिति पठ्यते । 5 SJG मधुनेति । 6 SJG 'वि' पतितः । 7 SJG जालूथ° । 8 S वेण्यागूढं । 9 JG विदूरथं । 10 SJG चैनाः । 11 J °संस्थाभ्याम् । 12 SJG प्रघ° शरीराः । 13 SJG परिव° । 14 SJG अ° । 15 SJG स्त्रियो वा । 16 SJG °वर° । 17 SJG द्रव्यं । 18 SG °भिग° । 19 J प्रथमेऽधिकरणे विंशोऽध्यायः । 0 प्रथमाधिकरणे विंशो° निशान्तप्रणिधिः ।

## [ आत्मरक्षितकम् । ]

शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत । द्वितीयस्यां कक्षायां कञ्चुकोष्णीषिभिर्वर्षधराभ्यागारिकैश्च तृतीयस्यां कुब्जवामनकिरातैश्चतुर्थ्यां मन्त्रिभिः संबन्धिभिर्दौ[ ३७ प्र. ]वारिकैः प्रासपाणिभिः । पितृपैतामहमहासम्बन्धानुबद्धं शिक्षितमनुरक्तं कृतकर्माणं च जनमासन्नं कुर्वीत ।

नान्यतोदेशीयमकृतार्थमानम् । स्वदेशीयं वापकृत्योपगृहीतम् । अंतर्वंशिकसैन्यं राजानं अन्तःपुरं च रक्षेत् ।

गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत् । तद्राजा तथैव प्रतिभुञ्जीत । पूर्वमग्नये वयोभ्यश्च बलिं कृत्वा प्रतिभुञ्जीत ।

---

१ पंचादिपरिकल्पितो जनसमूहो गणः । यथा चोक्तम्–

पंचावरं गणं विद्याद्दाशवारिति भार्गवः ।
यथासामर्थ्यमित्येवं बार्हस्पत्याः प्रचक्षते ॥

२ धनुर्वेदप्रवीणैः । राजशरीररक्षार्थम् । अन्येषां शस्त्रिणां अंतःपुरे अप्रवेशात् । धनुर्ग्रहणं च सर्वायुधाधिगमप्रदर्शनार्थमुक्तम् ।

यान्यायुधानि शस्त्राणि स्थावराणि चराणि च ।
चक्षुषो गोचरे तानि न तेषां गोचरे धनुरिति ॥

३ प्रथमकक्षायामिति शेषः ।

४ कंचुका आप्रपदीनाः कूर्पासकाः । उष्णीषाः सर्वमुखव्यापीनि शिरोवेष्टनानि । तानि विद्यंते येषां वर्षधरादीनाम् ।

५ पौत्रादिः संबंधः ।

६ क्षेप्यायुधहस्तैः ।

७ * ( विस्तृताऽत्र टिप्पणी दृश्यते । परं विनष्टाक्षरा इति गोदर्तु शक्यते । )

८ कृतं बहुधाः समरेषु अद्भुतं कर्म येन तं जनं शस्त्रपाणिं आसन्नम् ।

९ तमपि कृतार्थमानं शिक्षितमनुरक्तं कृतकर्माणं आसन्नं कुर्वीत ।

१० पितृपैतामहादिकम् ।

११ आसन्नं च कुर्वीतेति संबंधः । उक्तं च–

अपराद्धानि मित्राणि भृत्यानपि विरोधिनान् ।
................आसाद्य कुर्वीत विचक्षणः ॥

१२ पूर्वोक्तम् । १३ .... ...............मभिधाय रसदेभ्योऽभिधातुमाह ।

१४ नियुक्तव्यतिरिक्तानां अदृश्ये ।

१५ शाकतंदुलादि ।

१६ परिचारकपेषकपाचकादिभिः क्रमेण आस्वादितैः ।

१७ ने(?)ति संबन्धः । १८ वह्नि व विपर्दिगम् ।

---

1 SJG "स्या°" । 2 SJG "वरा" । 3 SJG 'च' पतित. । 4 SJG 'च' पतितः । 5 s पाऽप्यङ्क°; JG वाप्यपकृ° । 6 SJG 'प्रतिभुञ्जीत' इति नास्ति ।

अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य वयसां विपत्तिश्च । अन्नस्योष्मा मयूरग्रीवाभः शैत्यं आशुक्लिष्टस्येव वैवर्ण्यं सोदकत्वमस्विन्नत्वं च । व्यञ्जनानामाशुशुष्कत्वम् 'कार्थध्यामफेनविच्छिन्नभावो गंधस्पर्शरसवधश्च । द्रवेषु हीनातिरिक्तच्छायादर्शनं फेनपटलसीमंतोर्ध्वराजीदर्शनं च । रसस्य मध्ये नीला राजी पयसश्च ता[२७ द्वि.]म्रा मद्यतोययोः काली दध्नः श्यामा मधुनः श्वेता । द्रव्याणामार्द्राणामाशुम्लानत्वमुत्पक्वभावः । क्वाथनीलश्यामता च । शुष्काणामाशुशातनं वैवर्ण्यं च । कठिनानां मृदुत्वम् । मृदूनां च कठिनत्वम् । तदभ्यासे क्षुद्रजंतुवधश्च । आस्तरणप्रावरणानां ध्यामंमंडलता । तंतुरोमपक्ष्मशातनं च । लोहमणिमयानां पंकमलोपदेहता । स्नेहरागगौरवप्रभाववर्णस्पर्शवधश्चेति विषयुक्तस्य लिङ्गानि ।

विषप्रदस्य तु शुष्कश्यामवक्त्रता वाक्संङ्गः स्वेदो जृम्भणं चातिमात्रं

१ यदेव दर्शयन्नाह ।

२ शब्दोपलक्षितं भक्तादेरिति शेषः ।  ३ हस्तमृदितस्येव ।

४ क्वाथभावोऽग्निव्यवधानेऽपि । ध्यामभावो द्रव्यान्तरासंपर्केऽपि । फेनभावो विच्छिन्नभावश्च सन्देहस्वभावेऽपि ।

५ रसादिषु ।  ६ प्रकृतेर्विकारः ।  ७ * ।  ८ * ।  ९ मधुरसटकादीनाम् ।

१० आम्रादीनामार्द्राणां आशुम्लानत्वं हरितानामप्युत्पक्वभावः । क्वाथता कुंदादिदेशे श्यामता नीलता च ।

११ कठिनानामिति शुष्कनालिकेरादीनाम् ।  १२ मृदूनामिति कदलीफलादीनाम् ।

१३ पिपीलिकादि ।  १४ तूलिकंबलादीनाम् ।

१५ श्यामीकृतानि मंडलानि स्थाने स्थाने दृश्यंते ।

१६ कर्पासादिमयानाम् ।  १७ अविमृगादिरोममयानाम् ।  १८ रल्लकादीनाम् ।

१९ लोहानि सुवर्णरजतताम्रकालायसादीनि तन्मयानाम् ।  २० पद्मरागादिमणिमयानाम् ।

२० पंकोपदेहता रजोधारणम् ।

२१ स्नेहादीनां वधः स्निग्धमस्निग्धम् । रक्तरागस्य वैराग्यम् । गौरवस्य गुरुणो लघुत्वम् । प्रभाववधो भ्रामकादीनां सामर्थ्यविनाशः । वर्णवधो रक्तस्य श्वेतत्वम् । स्पर्शवधः शुद्धं स्पृश्यमानं परुषं भवतीत्यर्थः ।

२२ रागो लोहितादिर्विकृतिभेदः ।  २३ सामर्थ्यम् ।

२४ रागसमुदायः ।  २५ श्लक्ष्णत्वम् ।

२६ शुष्कत्वं मातंकया गुरुसोरे(वे) सति, श्यामवक्त्रता उद्वेगाद् वैवर्ण्यम् ।  २७ *

1 JTl अग्नेर्धूमनीलता । 2 SJO °स्फोट । 3 SJO अक्लिन्नं । 4 SJO च क्वाथ । 5 SJO स्पर्श° । 6 SJO फेनपटल, STl फेनमण्डल । 7 SJO 'च' पतितः । 8 SJ OTl श्यामा च । 9 S म्लानता°; STl JO म्लान । 10 SJO °श्यामता । 11 SJO °त्वं च । 12 SJO °षे । 13 SJO तन्तु । 14 SJO श्याम°, STl ध्यामश्याम, JTl ध्यामश्याम । 15 S पाकलेप°; STl पंकमलो°, JTl पंकलो° । 16 SJ लिङ्गुक्तिप्राणि, O हरि लिङ्गुक्तिप्राणि । 17 SJO स्तम्भ । 18 SJO भिन्नु° ।

वेपथुः । प्र[१८ प्र.]स्खलनं वाक्यविप्रेक्षणमावेगः कर्मणि[3] स्वभूमौ चानवस्थानमिति । तस्मादस्य जाङ्गुलीविदो[4] भिषजश्चासन्नाः स्युः ।

भिषग् भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपेषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत् ।

पानं पानीयं चौषधेन व्याख्यातम् । कल्पकप्रसाधकाः स्नानशुद्धशरीरहस्ताः समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः ।

स्नापकसंवाहकास्तरकप्रसाधकोदकपरिचार[१८ द्वि.]करजकमालाकारकर्म दास्यः प्रसिद्धशौचाः कुर्युः । ताभिरधिष्ठिता वा शिल्पिनः । आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः । स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि च स्ववक्षसि[11] बाहुषु च । एतेन परस्मादागतकं व्याख्यातम् ।

कुशीलवाः शस्त्राग्निरसक्रीडावर्जं नर्मयेयुः । आ(आ)तोद्यानि चैषामन्तस्तिष्ठेयुः । अश्वरथद्विपालङ्काराश्च ।

१ स्नेऽपि गते ।

२ परवाक्याकर्णनं किमहं ज्ञातोऽस्मि माकथामेव कुर्वंतीत्याशंकया ।

३ आवेगः सर्वांगानामाकुलत्वम् । उक्तं च—

यः कश्चिच्चरितगतिर्निरीक्षते मां संभ्रान्तः स्थिरमभिसर्पति द्रुतं वा ।
तत्सर्वं खलु मम शंकतेऽन्तरात्मा स्वैर्दोषैर्भवति हि शंकितो मनुष्यः ॥

४ यस्मादेवं परप्रयुक्ता विषं प्रयच्छन्ति तस्मात् ।

५ लोकप्रसिद्धा विद्या जांगुली । उपलक्षणं गारुडमंत्रादीनामेतत् । ६ छुरादि ।

७ यदपि पयस्य हस्ताद्गृह्यते तेन प्रत्येकं प्रतिस्वादितं राज्ञे प्रयच्छेत् । चकारात्ताम्बूलादिकम् ।

८ केशनखच्छेदकर्तारः । ९ शरीरशोभाकर्तारः । १० राजद्रव्यः ।

११ अथ तासां प्रावीण्यं नास्ति तदा ताभिर्विश्वास्याभिरधि० ।

१२ वस्त्रादिदाने प्रत्ययनकल्पविधिमाह ।

१३ सुकुमारत्वादवयवस्य विषस्य च महावीर्यत्वात् ।

१४ स्नानं सुगंधद्रव्यनिर्मितं सार्द्रं यच्छिरसि प्रयुज्यते ।

१५ कुंकुमादि । १६ उद्वर्तनं सुगंधस्यैव प्रघर्षः ।

१७ चूर्णः शुष्कः स्नानोत्तरकालं केशवासाय यः प्रयुज्यते । १८ सुगंधवस्त्रः धूपः ।

१९ सुकुमारस्थाने । २१ स्वगृहागतेन ।

२२ तत्राप्ययमेव विधिः प्रसदाने द्रष्टव्य इति ।

२३ प्रत्येकं [ स्त्री ] टाराब्दः । २४ विनोदयेयुः । २५ अंतर्वंशिकहस्ते ।

1 J वाक्यविप्रेक्षण; Jvl वाक्यविप्रेक्षण । 2 SJ °वेगः; Svl °वेगः । 3 J स्वकर्मणि । 4 SJG जाङ्गली° । 5 S पाचकपेषका° । 6 SJG वस्त्रहस्ता° । 7 SJG 'प्रसाधकोदकपरिचारक' नास्ति । 8 SJG 'प्रसिद्धशौचाः' नास्ति । 9 SJ 'च' नास्ति । 10 SJG स्ववक्षो । 11 SG च व्याख्यातम् । 12 SJG 'क्रीडा' नास्ति । 13 SJG आतोद्यानि । 14 SJG रथद्विपालंकारा° । -

आप्तपुरुषाधिष्ठितं यानवाहन[३९ अ.]मारोहेत् । नावं चाप्तनाविकाधिष्ठिताम् । अन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात् ।

उदकान्ते सैन्यमासीत । मत्स्यग्राहविशुद्धमुदकमवगाहेत ।

व्यालग्राहविशुद्धमुद्यानं गच्छेत् । लुब्धकश्वगणिभिरपास्तस्तेनव्यालपराबाधभयं चललक्ष्यपरिचयार्थं मृगारण्यं गच्छेत् ।

आप्तशस्त्रग्राहाधिष्ठितः सिद्धतापसं पश्येत् ।

मन्त्रिपरिषदा सह सामन्तदूतं प[३९ द्वि.]श्येत् । सन्नद्धोऽश्वं रथं हस्तिनं वारूढः सन्नद्धमनीकं पश्येत् ।

निर्याणेऽभियाने[18] च राजमार्गमुभयतः कृतारक्षं शस्त्रिभिर्दण्डिभिश्चापास्तशस्त्रहस्तप्रव्रजितव्यङ्गं गच्छेत् । न पुरुषसम्बाधमवगाहेत ।

यात्रासमाजोत्सवप्रहवणानि च दशवर्गिकाधिष्ठितानि गच्छेत् ।

यथा च योगपुरुषैरन्यान् राजाऽधितिष्ठति ।
तथाऽयमन्याबाधेभ्यो रक्षेदात्मानमात्मवानिति[24] ॥

॥ इति विनयाधिकारिके एकविंशोऽध्यायः ॥ छ ॥

॥ समाप्तं चेदं विनयाधिकारिकं प्रथममधिकरणम् ॥

*

---

१ शिबिकादि । २ इत्यादि । ३ तत्रापि ।
४ उदकान्ततटद्वये । ५ रक्षार्थं जलक्रीडायाम् । ६ शिशुमारादि ।
७ उद्यानगमने विधानमाह । सिंहादि । ८ चलचर । ९ तथा ।
१० परातिसंधानभयात् । ११ प्रतिवारयाविदानार्थम् । १२ कृतकवचः ।
१३ स्वकीयम् । व्यूहरचनादौ विश्वासाभावात् ।
१४ निर्गमे प्रवेशे च । १५ निग्रहकर्मभिः ।
१६ प्रत्यवायभयात् । अथैकार्थवशादवगाहेत तथा ।
१७ यात्रा देवादीनाम् । समाजः मेलादिः । उत्सवः पुत्रोत्सवादिः । प्रहवणं विवाहादि ।
१८ दशपुरुषवर्गनियुक्ता दशवर्गिकाः । १९ प्रत्यपायप्रतीकारार्थम् ।
२० अत्र हेतुमाह । २१ तीक्ष्णरसदादिभिः । २२ शत्रून् । २३ विजिगीषुः ।
२४ गृहीतविद्यः इन्द्रियसंयोगः सुविशुद्धामात्यसंपन्न उपगृहीतस्वपरपक्षो निश्चितमंत्रो रक्षितात्मा सर्वत्र आत्मवानुच्यते ।

# द्वितीयमधिकरणम् ।

## [ जनपदनिवेशः । ]

जनपदनिवेश इति सूत्रम् । भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यंदवमनेन वा निवेशयेत् ।

शूद्रकर्षकप्रायं कुलशतावरं पंचकुलशतपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् ।

नदी [ ४० प्र. ] शैलवनभृष्टिदरीसेतुबन्धशमीशाल्मलीक्षीरवृक्षानन्तेषु सीम्नां स्थापयेत् ।

अष्टशतग्राम्या मध्ये स्थानीयं चतुःशतग्राम्या द्रोणमुखं द्विशतग्राम्याः कार्वटिकं दशग्रामीसङ्ग्रहेण स्थापयेत् । अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् ।

तेषामन्तराणि वागुरिकशबरपुलिंदचंडालारण्यचरा रक्षेयुः ।

ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकाराण्यभिरूपदायादकानि प्रयच्छेत् ।

---

१ जनाभावपूर्वकं ते पर्यंतेऽवस्थानं कुर्वंति यस्मिन् असौ पृथ्वीभागो जनपदस्तस्मिन् चातुर्वर्ण्यादेर्यथायोगमव[स्थापनमिति । ]

२ निविष्टपूर्वं अनिविष्टपूर्वं च । अनिविष्टपूर्वे जनपदशब्दो न प्रवर्तते । पर्वतसमुद्रादौ कथं यस्य निवेश इति चेत् स्मर्यमाणनिवेशो भूतपूर्वः [ स्वल्पधीदलवादिसुखसाध्यः । ] अस्मर्यमाणनिवेशो महावृक्षावच्छन्न [ निःशेषनिवेशचिन्हो दुःख ] साध्य इति भावः ।

३ स्वदेशाभिष्यंदवमनेन वेति । यथा निर्झरासन्ननिम्ने कालांतरेण निःष्यंदो जलसंग्रहो भवति । तद्वत्तत्र प्रजाभिष्यंदः सन्ततियाहुल्यम् । एकस्मिन्नेव कुटुम्बे पुत्रपौत्रभ्रातृभागिनेयादिबाहुल्यात् । न धान्यादिप्राचुर्यात् । मूलकुटुम्बमवस्थाप्य शेषाणामपकर्षणं वमनं तेन वा निवेशयेत् ।

४ विद्यादिभिरुपभोग्यत्वात् ।

५ कुलशतमेदे मतभेदस्तथा हि—

तुल्याधाने कुलं चिप्रादिस्थानीयाः प्रचक्षते । दंपत्यं कुलमित्येके हलं त्वन्ये प्रचक्षते ॥ इति ।

तुल्याधान-दंपत्ययोः क्षेत्र-विभागेऽनंगत्वादेकद्वित्रिहलत्वेन कुलं तदुत्तममध्यमावरत्वमपेक्ष्यते ।

६ अर्धतृतीयकुलशतकल्पो मध्यमः सार्धक्रोशसीमा भवतीत्यर्थादापद्यते ।

७ शूद्रादिजातिसमूहो ग्रामः ।

८ गोरुतं निशावसाने यावन्तं प्रदेशं गत्वा रुतं व्याप्नोति । पूर्वस्मात्क्रोशो पश्चिमचिन्हं उत्तरस्मात्क्रोशो [ दक्षिणचिन्हमिति । ]

---

1 SJG नास्त्येतत्सूत्रात्मकं वाक्यम् । 2 SJG शतकुल । 3 SJG वृष्टिदरी° । 4 SJG शमीक्षीर° । 5 Svl वृक्षान्तरेषु सीमां । 6 SJ Gvl खार्वटिकं । 7 SJG सग्रहेण सग्रहणं स्थापयेत् । 8 FJ दण्डकराण्यभिरूप° । 9 SJG दायकानि ।

अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानिकानीकस्थचिकित्सकाश्व(श्व)दमकर्जङ्घाकारिकेभ्यश्च विक्रयाधानवर्जानीति ।

करदेभ्यः कृतक्षेत्राण्येकपौरुषिकाणि प्रयच्छेत् । अकृतानि च कर्तृभ्यो ना[देया]नि ।

अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत् । ग्रामभृतकवैदेहका वा कृषेयुः । अकृषन्तो वाऽवहीं[४० द्वि.]नं दद्युः । धान्यपशुहिरण्यैश्चैताननुगृह्णीयात् । तान्यनुसुखेन दद्युः ।

अनुग्रहपरिहारौ चैतेभ्यः कोशवृद्धिकरौ दद्यात् । कोशोपघातकौ वर्जयेत् । अल्पकोशो हि राजा पौरजानपदानेव ग्रसते ।

निवेशसमकालं यथागतकं वा परिहारं दद्यात् । निवृत्तपरिहारान् पितेवानुगृह्णीयात् ।

आकरकर्म्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् ।

सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् । पुण्यस्थानारामाणां च ।

संभूय सेतुबन्धादपक्रामतः कर्म्मकरबलीवर्दाः कर्म्म कुर्युः । व्ययक[४१ प्र.]र्म्मणि च भागी स्यात् न चांशं लभेत् ।

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ।

दासाहितकबन्धूनशृण्वतो राजा विनयं ग्राहयेत् । बालवृद्धव्यसन्यनाथांश्च बिभृ[या]त् । स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ।

बालद्रव्यं ग्रामवृद्धा वर्द्धयेयुराव्यवहारप्रापणात् देवद्रव्यं च ।

अपत्यदारं मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशः पणो दण्डः । अन्यत्र पतितेभ्योऽन्यत्र मातुः ।

पुत्रदारमप्रतिविधाय प्रव्रजतः पूर्वसाहसदण्डः स्त्रियं च प्रव्राजयतः । लुप्तव्यायामः प्रव्रजेदापृच्छ्य धर्म्मस्थानन्यथा नियम्येत ।

वानप्रस्थादन्यः प्रव्रजितभावः सजा[ता]दन्यः सङ्घः [४१ द्वि.] सामुत्था-

यिकादन्यः समा(म)यानुबन्धो नास्य जनपदमभिनिवेशेत । न च [त]त्रारामा विहारार्था वा शालाः स्युः ।

नटनर्तकगायनवादकवाग्जीवनकुशीलवा या न कर्म्मविघ्नं कुर्युः । निराश्रयत्वाद्ग्रामाणां क्षेत्राभिरामत्वाच्च पुरषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिभ(र्भ)वति ।

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देश(शं) परिहरेद्राजा व्ययक्रीडाश्च वर्जयेत् ॥
दण्डविष्टिकराबाधै रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैर्व्याधिभिश्च पशुव्रजान् ॥
वल्लभैः कार्म्मिकैस्स्तेनैरन्तपालै[४२ प्र]श्च पीडितम् ।
शोधयेत् पशुसंघैश्च क्षीयमाणं [वणि]क्पथम् ॥
एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत् पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥

॥ इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे प्रथमोऽध्यायः ॥ जनपदनिवेशः[10] ॥

*

## [ भूमिच्छिद्रापिधानम् । ]

अकृष्यायां भूमौ पशुभ्यो विधीतानि प्रयच्छेत् । प्रदिष्टाभयस्थावरजङ्गमानि च ब्रह्मसोमारण्यानि तपस्विभ्यो गोरुतपराणि प्रयच्छेत् ।

तावन्मात्रमेकद्वारं खातगुप्तं स्वादुफललतागुल्मगुच्छमकंटकिद्रुममुत्तानतोयाशयं दान्तमृगचतुष्पदं भग्नखदं [४२ द्वि] द्रव्यालं[16] मार्गयुकहस्तिहस्तिनीकलभं[18] मृगवनं विहारार्थं राज्ञः कारयेत् । सर्वातिथिमृगं प्रत्यंते चान्यत् मृगवनं भूमिवशेन वा निवेशयेत् ।

कुप्यप्रदिष्टानां च द्रव्याणां तरुणीमेकैकशो वनानि[20] निवेशयेत् । द्रव्यवनकर्म्मांतानटवीश्च द्रव्यवनापाश्रयाः । प्रत्यंते हस्तिवनमटव्या रक्षं[21] निवेशयेत् ।

नागवनाध्यक्षः पार्वतं नादेयं सारसमानूपं च नागवनं विदितपर्यन्तप्र-

---

1 sJvlG साम्रुत्थायिका°, svl साम्रुत्थायिका° । 2 sJG वा नास्य । 3 sJG °मुपनिवेशेत । 4 sJ तत्रारामविहारार्था, svl तत्रारामा° । 5 sJG 'वा' नास्ति । 6 sJG नर्तन° । 7 sJG क्षेत्राभिरतत्वात् । 8 sJG वारयेत् । 9 sJ द्रव्य द्विपवनम् । 10 sJ जनपदनिवेश प्रथमोऽध्यायः । आदितो द्वाविंश, ■ प्र° जन° आदितो द्वाविंश । 11 sJG विधीतानि । 12 sJG ब्राह्मणेभ्यो ब्रह्मसोमारण्यानि । 13 sJG तपोवनानि च तपस्विभ्यो । 14 sJvl गोत्र(त), svl Jvl गोरुत, J गोत्रक° । 15 sJG 'लता' नास्ति । 16 s व्याळमार्ग°, J व्यालमार्ग° । 17 sJG मार्गयुक° । 18 sJvl कलभ° । 19 sJG 'तरुणी' नास्ति । 20 sJG वा वनम् । 21 sJvl रक्षन्, J Jvl रक्षम् ।

वेशनिष्कासं नागवनपालैः पालयेत् । हस्तिघातिनं [ ४३ अ.] हन्युर्दन्तयुगं स्वयं मृतस्याहरतः सपादचतुष्पणो लाभः । नागवनपाला हस्तिपक-पादपाशिक-सैमिक-वनचरक-पारिकर्म्मिकसखाः हस्तिमूत्रपुरीषच्छन्नात्मगन्धा भल्लातकीशाखापत्रप्रच्छन्नाः पञ्चभिः सप्तभिर्वा हस्तिबन्धकीभिः सह चरन्तः शय्यास्थान[ प ]द्यालेंडनदीकूलघातोद्देशेन हस्तिकुलपर्यग्रं विद्युः ।

यूथचरमेकचरं निर्यूथं यूथपतिं हस्तिनं व्यालं मत्तं पोतं बद्धमुक्तं च निबन्धेन विद्युः । [ ४३ द्वि ] अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः । हस्तिप्रधानो विजयो राज्ञः[8] । परानीकव्यूहदुर्गस्कंधावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्म्मणो हस्तिनः[10] ।

कालिङ्गाङ्गरजाः श्रेष्ठाः प्राच्याश्चेदि[13]करूषजाः ।
दशार्णाश्चापरांताश्च गजानां[15] मध्यमा मताः ॥
सौराष्ट्रकाः पाञ्चनदास्तेषां प्रत्यवरा(व)राः स्मृताः ॥ इति[19] ॥

{ †उत्कलानां च देशस्य दक्षिणस्यार्णवस्य च ।
सह्यस्य च कलिंगस्य मध्ये कालिंगकं वनम् ॥

तथा ।

†वैदेशं नर्म्मदा चैव ब्रह्मवर्द्धनमित्यपि ।
मध्ये च पारियात्राणां वनं स्यादांगरेयकम् ॥

इति वनद्वयजाः श्रेष्ठाः ।

†लोहित्यस्य प्रयोग[ ४४ अ ]स्य गंगाहिमवतोरपि ।
मध्ये प्राच्यं वनं तत्र संभवंति दिशां गजाः ॥

[ तथा ]

†मेकला त्रिपुरी चैव दशार्णो देश इत्यपि ।
उन्मत्तगंगामित्येषां मध्ये चेदिकरूपकम् ॥

तथा ।

---

1 sJG °निष्कसनं, svl °निष्कासम् । 2 sJG मृतस्याहरत । 3 sJG 'आत्म' नास्ति । 4 sJG शाखमात्रिच्छन्ना, °Gvl शाखामतिच्छन्नान् । 5 sJG °पयाल°कूल° । 6 sJG °कूलपातो°; svl °कूलपोतो° । 7 svl Gvl बन्ध; Gvl बद्धं मुक्तम् । 8 sJG राज्ञाम् । 9 s प्रा°हरकर्माणो । 10 sJG हस्तिन इति । 11 s कलिङ्ग°, JG कलिङ्ग । 12 sJG °गजा । 13 sJ प्राच्याश्चेति । 14 sJG करूषजा । 15 sJG द्विपना° । 16 sJG सौराष्ट्रका । 17 sJGvl पाञ्चजना. । 18 sJG प्रत्यवरा । 19 sJG 'इति' नास्ति ।

( {†} एतच्चिह्नांकिता श्लोका मुद्रितेषु पुस्तकेषु नोपलभ्यन्ते )

†देशस्य च दशार्णानां ख्यातस्य च महागिरेः ।
विंध्याद्रेर्वेत्रवत्याश्च मध्ये दाशार्णकं वनम् ॥
तथा ।
†अवंतीनां च देशस्य नर्म्मदायास्तथैव च ।
द्वारकार्बुदयोश्चैव मध्ये सौराष्ट्रकं वनम् ॥
†कुरुक्षेत्रस्य देशस्य कालिकाकाननस्य च ।
सिंधोर्हिमवतश्चैव मध्ये पांचनदं वनम् ॥}
सर्वेषां कर्मणा वीर्य[1] जवस्तेजश्च वर्धते ॥

॥इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे द्वितीयोऽध्यायः। भूमिच्छिद्रापिधानं[2]॥[४४द्वि.]

*

## [दुर्गविधानम् ।]

चतुर्दिशं जनपदांते सांपरायिकं दैवकृतं दुर्गं कारयेत् । अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकम् । प्रास्तरं गुहां वा पार्वतम् निरुदकस्तम्बमिरिणं वा धान्वनम् । खंजनोदकं स्तम्बगहनं वा वनदुर्गम् । तेषां नदीपर्वतदुर्गं जनपदारक्षस्थानम् । धान्वनं 'वनदुर्गमटवीस्थानमापद्य[प्र]सारो' वेति[10] ।

जनपदमध्ये समुदायस्थानं स्थानीयं निवेशयेत् । वास्तुकप्रशस्ते देशे नदीसङ्गमे ह्रदस्याविशोषस्याङ्के सरसस्तडागस्य वा वृत्तं दीर्घं चतुरस्रं वा वास्तुवशेन वा प्रदक्षिणोदकं पण्यपुटभेदनमंसपथवारिपथाभ्यामुपेतम् ।

तस्य परिखास्तिस्रो दण्डान्तरा द्विदंडांतरा वा कारयेत् । चतुर्दश द्वादश दशेति दण्डान्[19] विस्तीर्णा विस्तारादवगाढाः[21] पादोनमर्द्धं भूमिवशेन वा त्रिभागमूला मूलेचतुरस्रा वा पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा[४५ प्र.] तोयान्तिकीरागंतुतोयपूर्णा वा सपरिवाहाः पद्मग्राहवतीश्च ।

चतुर्दण्डापकृष्टं परिखायाः षड्दण्डोच्छ्रितमवरुद्धं द्विगुणविष्कम्भं खाताद्वपं(प्रं) कारयेत् ।

उ(ऊ)र्ध्वचयं मञ्चकपृष्ठं कुम्भकुक्षिकं वा हस्तिभिर्गोभिश्च क्षुण्णं कण्टकि-

1 J वीर्य° । 2 SJ भूमिच्छिद्रविधानं द्वितीयोऽध्यायः । आदितस्त्रयोविंशः; G द्वि° भूमि° आदितस्त्रयोविंशः । 3 SVl JVl देवकृतं । 4 J प्रस्तरं; JVl प्रास्तरं । 5 SJG गुहां । 6 SJ खजनो°; SVl खंजनो° । 7 SJG स्तम्ब° । 8 SJG धान्वनवनदुर्गं । 9 SJVl आपद्यप्रसारो; SVlJG आपद्यप्रसारो । 10 SVG 'इति' नास्ति । 11 SJG समुदय° । 12 SG ह्रदस्य वा अविशोष°; SVl ह्रदस्य वाटविशोष°; J °वाविशोष° । 13 SJG तटाक° । 14 वास्तुक° । 15 SJG 'वा' नास्ति । 16 SJG 'पथ' नास्ति । 17 SVl °मुपेतस्य । 18 SJG 'द्विदंडातरा वा' नास्ति । 19 S दण्डानु°; SVl दण्डान् । 20 SJG विस्तारादं° । 21 SJG °गाधाः । 22 SJG 'भूमिवशेन' नास्ति । 23 SJG मूले चतु° । 24 SJG 'वा' नास्ति । 25 SG 'च' नास्ति; SVl °वतीश्च । 26 SJG तद्विगुण° । 27 SJG मञ्चपृष्ठं ।

गुल्मविषवल्लीप्रतानवन्तम् । पांशुशेषेणं वास्तुच्छिद्रं राजभवनं वा पूरयेत् ।

वप्रस्योपरि प्राकारं विष्कम्भद्विगुणोत्सेधमैष्टकं द्वादशहस्तादूर्ध्वमोजयुग्मं वा आचतुर्विंशतिहस्तादिति कारयेत् ।

रथचर्यासञ्चारं तालमूलं मुरजकैः कपिशीर्षकैश्चाचिताग्रम् । पृथुशिलासंहतं वा शैलं नत्वेव काष्ठमयं कारयेत् । अग्निरवहि[तो हि] तस्मिन् वसति ।

विष्कम्भचतुरस्रमट्टालकमुत्सेधसमावक्षेपसोपानं कारयेत् ।

द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलामध्यर्द्धायामां प्रतोलीं कारयेत् । अट्टालक[४५ द्वि.]प्रतोलीमध्ये त्रिधानुष्काधिष्ठानं सपिधानच्छिद्रफलकसंहतमिंद्रकोशं कारयेत् ।

अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायामं देवपथं कारयेत् । दण्डान्तरा द्विदण्डान्तरा वा चर्याः कारयेत् । अग्राह्ये देशे प्रधावनिकां निष्किरद्वारं च ।

बहिर्जानुभंजनी [त्रि]शूलप्रकरकूपकूटावपातकण्टकमतिसराहिपृष्ठतालपत्रशृङ्गाटकश्वदंष्ट्रार्गलोपस्कन्दनपादुकाम्बरीषकोदपानकैः प्रतिच्छन्नं छन्नपथं कारयेत् ।

प्राकारमुभयतो मेंढकमध्यर्धदंडं कृत्वा प्रतोलीषट्तुलांतरं द्वारं निवेशयेत् । पञ्चदण्डादेकोत्तरमा अष्टदण्डादिति चतुरस्रं षड्भागमायामादधिकमष्टभागं वा । पञ्चदशहस्तादेकोत्तरमा[४६ प्र.]अष्टादशहस्तादिति तलोत्सेधः । स्तम्भस्य परिक्षेपः षडायामो द्विगुणो निखातश्चूलिकायाश्चतुर्थो भागोवेति । आदितलस्य पंचभागाः शाला वापी सीमागृहं च । दशभागिकौ द्वौ प्रतिमंचौ । तद्यथा ।

एवं भागास्तले कार्याः मत्यंशं पंचकोष्ठकाः ।
यथायोगं विभागोऽत्र शालासीमागृहादिषु ॥

---

1 SJG पांशु° । 2 SJ विशेषेण । 3 SJG 'राजभवनं' नास्ति । 4 SJG ओजं युग्मम् । 5 GVl °श्चारचिताग्रम् । 6 SJ सहितं; G संहितं । 7 SJG शैलं कारयेत् । न त्वेव काष्ठमयमग्नि° । 8 SJ द्वितलां द्व्यर्धायामां; JVl °मर्धायामां । 9 S प्रतोळी । 10 SVlG सापधान° । 11 SJG °मितीन्द्रकोशं । 12 SJG चतुर्गुणायाममनुप्राकारमष्टहस्तायतं देवपथं । 13 SJ चर्या°; SVl चर्याः; G चाचार्याः । 14 SJ आग्राह्ये । 15 SJG प्रधावितिकां । 16 SJ निष्कुर°; SVl निष्कर°; G निष्कुह° । 17 S °भगिनीं; SVl °भयक्षनी । 18 SJ त्रिशूलप्रकारकूप°; SVl आशूलप्रकरकूपकूट° । 19 S °र्गलोप° । 20 SJG °स्कन्दन° । 21 SJG °रीषोदपानकैः । 22 SJG 'प्रतिच्छन्नं' नास्ति । 23 SJ मण्डलक; SVl मण्डक; G मण्डपक । 24 SJG तुलान्तरमध्याऽऽऽदण्डा° । 25 SJVl षड्भागायामा°; JVl षड्भागममा° । 26 G तुलो° । 27 SVl °क्षेप° । 28 SVl षडायामो; J लषडायामो । 29 SJG चतुर्भागः । 30 SJG 'वेति' नास्ति । 31 SJG 'तद्यथा' इत आरभ्य 'कोष्ठकमवम्' इत्यन्तः पाठो नास्ति ।

कोष्ठकस्य त्रिभिस्त्र्यंशैः कोष्ठको जायतेऽत्र तु ।
त्रिभिः षडंशैः कोष्ठार्द्धं पादोऽपि द्वादशांशकैः ॥
युक्ता कोष्ठत्रयं त्र्यंशैरुभयोः पार्श्वयोरपि ।
पंचकोष्ठा भवेद्वापी मध्ये च कोष्ठकत्रयम् ॥

अन्तरमाणीहर्म्यं च । समुच्छ्रयादर्द्धतले[8] स्थूणावन्धश्च । अर्द्धवास्तुकमुत्तमागारं त्रिभागोत्तरं वा । इष्टकावबद्धपार्श्वं वामतः [४६ द्वि.] प्रदक्षिणसोपानम् । गूढभित्तिसोपानमितरत्तो द्विहस्तं तोरणशिरः । त्रिपंचभागिकौ द्वौ कपाटयोगौ द्वौ[9] परिघाविति[10] । अरत्निरिन्द्रकीलक इति[11] । पञ्चहस्तमाणिद्वारं चत्वारो हस्तिपरिघा इति[13] । निवेशार्द्धं[14] हस्तिनखम्[15] । मुखसमः सङ्क्रमः संहार्यो भूमिमयो वा निरुदके ।

प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत् ।

प्राकारमध्ये वापीं कृत्वा पुष्करिणीद्वारम्[16] । चतुःशालमध्यर्द्धविवृतांतरं [४७ प्र] साणिकं[17] कुमारीपुरम् । मुंडहर्म्यद्वितलं मुण्डकद्वारम्[18] । भूमिद्रव्यवशेन वा निवेशयेत् । त्रिभागाधिकायामा भांडवाहिनीः कुल्या[ः] कारयेत् ।

तासु पाषाणाः कुद्दालाः कुठारीकाण्डकल्पनाः ।
मुषुंढी[19] मुद्गरा दण्डाश्चक्रयंत्रशतघ्नयः ॥
कार्याः कार्म्मारिकाश्शूलाः वेधनाग्राश्च वेणवः ।
उष्ट्रग्रीव्यग्निसंयोगाः कुप्यकल्पे च यो विधिः[20] ॥

॥ इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे द्वि(तृ)तीयोऽध्यायः । दुर्गविधानम्[21] ॥

*

# [ दुर्गनिवेशः । ]

त्रयः प्राची[४७ द्वि.]ना राजमार्गास्त्रय उदीचीना इति वास्तुविभागः ।

[1]द्वादशद्वारो युक्तोदकभ्र[2]मच्छन्नपथः । चतुर्दण्डान्तरा रथ्या राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीतपथाः । सं[3]यानीयव्यूहश्मशानग्रामपथाश्चाष्टौ[4] दण्डा इति[5] । चतुर्दण्डः सेतुवनपथः । द्विदण्डो हस्तिक्षेत्रपथः । पञ्चारत्नयो[6] रथपथः । द्वौ अरत्नी[7] क्षुद्रपशुमनुष्यपथः ।

प्रवीरे वास्तुनि राजनिवेश[8]श्चातुर्वर्ण्यसमाजीवे[9] ।

वास्तुहृदयादुत्तरे नवमे[10] भागे यथोक्तमन्तःपुरविधानं[11] प्राङ्मुखमुदङ्मुखं वा स्थापयेत्[12] । तस्य पूर्वोत्तरं भागमाचार्यपुरोहितेज्यातोयस्थानं मंत्रिणश्चाधिवसेयुः[13] । पूर्वदक्षिणं[14] भागं महानसं हस्तिशालाः कोष्ठागारं च । ततः परं गंधमाल्यधान्यरसपण्याः प्रसाधनकारवः[15] । क्षत्रियश्च[16] पूर्वां दिशमधिवसेयुः । दक्षिणपूर्वभागं[17] भाण्डागारमक्षपटलं कर्मनिषद्याश्च । दक्षिणपश्चिमं[18] भा[४८ प्र.]गं कुप्यगृहमायुधागारं च । ततः परं नगरधान्यव्यावहारिककार्मा[19]न्तिकबलाध्यक्षाः पक्वान्नसुरामांसपण्याः रूपाजीवास्ताला[20]वचरा वैश्याश्च दक्षिणां दिश[21]मधिवसेयुः । पश्चिमदक्षिणं भागं खरोष्ट्रगुप्तिस्थानं कर्मगृहं च । [पश्चिमोत्तरभागं यानरथशालाः । ततः परमूर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवश्शूद्राश्च पश्चिमां दिशमधिवसेयुः ।] उत्तरपश्चिमं भागं पण्यभैषज्यगृहम् । उत्तरस(पू)र्व[22]भागं कोशो गवाश्वं च । ततः परं नगरराजदेवतालोहमणिकारवो ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः ।

वास्तुच्छिद्रानुशालेषु[23] श्रेणीप्र[24]पणिनिकाया वसेयुः ।

[25]अपराजिताऽप्रतिहतजयंत[वैजयन्त]कोष्ठान्[26] शिववैश्रवणाश्विश्रीमदिरागृहाणि[27] च पुरमन्ये(ध्ये) कारयेत् । य[28]थोद्देशं वास्तुदेवता[:] स्थापयेत् । ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि । बहिः परिखा[29]याः धनुश्शताव[30]कृष्टाश्चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः । यथादिशं च दिग्देवताः ।

---

1 SJG स द्वादश । 2 SJG भूमि° । 3 SJ सयोनीय° । 4 SJG °श्चाष्टदण्डा । 5 SJG 'इति' नास्ति । 6 SJG रथपथश्चत्वारः पशुपथः । 7 SJG 'अरत्नी' नास्ति । 8 S निवेशा.; svl निवेशः । 9 SJG °जीवे । 10 SJG नवभागे । 11 SJG 'यथोक्तविधानमन्त पुरविधानं' नास्ति । 12 SJG कारयेत् । 13 SJG आवसेयुः । 14 SJG दक्षिणं भागं । 15 SJG प्रधानकारवः । 16 SJG क्षत्रियाश्च । 17 SJG °पूर्वं भागं । 18 SJG °पश्चिमं भागं । 19 SJG कार्मान्तिक° । 20 S ताळापचारा; J तालापचारा । 21 SJ °दिशाम° । 22 SJG °पूर्वं भागं । 23 SJG °च्छिद्रानुसालेषु । 24 SJG °प्रवहणी°; svl °प्रवहणि° । 25 S आपराजिता° । 26 SJG जयंतवैजयन्तकोष्ठकान् । 27 SJG गृहं । 28 SJG कोष्ठकालेयेषु यथोद्देशं; svl कोष्ठकेषु° । 29 svl परिघायाः । 30 SJ धनुश्शतापकृष्टा° ।

उत्तरः पूर्वो वा श्मशानभोगो वर्ण्योत्तमानाम्। द[४८ द्वि]क्षिणेन श्मशानं वर्णावराणाम्। तस्यातिक्रमे पूर्वः साहसदंडः। पापं(पं)ड-चण्डालानां श्मशानांते निवासः।

कर्मान्तक्षेत्रवशेन कुटुंबिनां सीमानं स्थापयेत्। तेषु पुष्पफलवाटं-धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः। दशकुलीवाटं कूपस्थानम्।

सर्वस्नेहधान्यक्षारलवणगंधभैषज्यशुष्कशाकयवसवल्लूरतृणकाष्ठलोहचर्माङ्गारस्नायुविषविषाणवेणुवल्क[ल]सारदारुप्रहरणावरणाश्मनिचयाननेकवर्षोपभोगसहान् कारयेत्। नवेन वा नवं[8] शोधयेत्।

हस्त्यश्वरथपदातमनेकमुख्यं च स्था[४९ अ]पयेत्। अनेकमुख्यं हि परस्परभयात्परोपजापं(पं) नोपैति[11]। एतेनांतपालदुर्गसंस्कारा व्याख्याताः।

न च बाहिरिकां कुर्यात्पुरराष्ट्रोपघातिकान्।
क्षिपेज्जनपदे चैतां सर्वान् वा दापयेत् करान्॥

॥ इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे चतुर्थोऽध्यायः॥ दुर्गनिवेशः[13]॥

*

## [ सन्निधातृचेयकर्म। ]

सन्निधाता कोशगृहं कोष्ठागारं [14]पण्यगृहं कुप्यगृहमायुधागारं बंधनागारं च कारयेत्।

चतुरस्रां[15]मनुदकोपस्नेहां वापीं खानयित्वा पृथुशिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारुपञ्जरं भूमिसमं त्रितलमनेकविधानं कुट्टिम[४९ द्वि]दे-शस्थानतलमेकद्वारं यन्त्रयुक्तसोपानं भूमिगृहं कारयेत्।

तस्योपर्युभयतोनिषेधं सप्रग्रीवमैष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत् प्र(प्रा)सादं वा।

जनपदान्ते ध्रुवनिधिमापदर्थमभित्यकैः[19] कारयेत्।

पक्वेष्टकास्तम्भं चतुःशालमेकद्वारमनेकस्थानतलं विघृतस्तंभापसारमुभयतः पण्यगृहम्। कोष्ठागारं च दीर्घबहुशालिम्। कक्ष्यावृतकुड्यमन्तःकुप्यगृहम्।

---

1 SJG श्मशानवाट। 2 SJ दक्षिणेन वर्णोत्तराणाम्, G वर्णोत्तमानाम्। 3 SJG °ते वास। 4 SJG °वशेन वा कुटुम्बिना। 5 SJG °वाटषण्डकेदारान् धान्य°। 6 SJG कूपस्थान। 7 SJG 'गध' नास्ति। 8 SVlG नवेनानव। 9 SJG °रथपादातम्°। 10 SJG मुख्यमवस्थापयेद्। 11 SJG नोपैतीति। 12 SJG °घातकान्। 13 SJ दुर्गनिवेश चतुर्थोऽध्याय आदित पञ्चविंश, G चतुर्थो° दुर्गं आदित°। 14 SJG पण्यगृह कोष्ठागारं। 15 SJG चतुरश्रो वापीमनुदको°। 16 SJ °सोपान देवताविधान (G पिधान) भूमि°। 17 SJ सप्रग्रीव°। 18 SJG प्रासाद वा। 19 SVl °भियुक्तै। 20 SJG पुरुषै कारयेत्। 21 SJG °स्तम्भ चतु°। 22 SJG बहुशाल। 23 SJG कक्ष्या°।

तदेव भूमिगृहयुक्तमायुधागारम् । पृथग्धर्मस्थीयमहामात्रीयम् । विभक्तस्त्रीपुरुषस्थानमपराधतः[2] सुगुप्तकक्षं[3] बन्धनागारं कारयेत् ।

[ ‡सर्वेषां शालाखातोदपानवच्च स्नानगृहाग्निविषत्राणमार्जारनकुलारक्षास्था दैवपूजनवृत्ताः (svl. युक्ताः) कारयेत्‡ । ]

कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत् । तज्जातकरणाधिष्ठितः पुराणं नवं वा रत्नं सा[५० प्र.]रं फल्गुकुप्यं वा प्रतिगृह्णीयात् ।

तत्र रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च सारोपधौ मध्यमः फल्गुकुप्योपधौ तच्च तावच्च दण्डः ।

रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात् । अशुद्धं छेदयेत् । आहर्तु[ः] पूर्वः साहसदण्डः ।

शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात् । विपर्यये मूल्यद्विगुणो दंडः ।

एतेन पण्यं कुप्यमायुधं च व्याख्यातम् ।

सर्वाधिकरणेष्वायुक्तोपयुक्ततत्पुरुषाणां पणद्विपणचतुःपणपरमापहारेषु पूर्वमध्योत्तमवधा दण्डा[ः] । कोशाधिष्ठितस्य कोशावच्छेदे घातः । तद्वैयावृत्यकराणामर्द्धदण्डाः[9] । परिभाषणमविज्ञाते[10] चौराणामभिप्रधर्षणे चित्रो घातः ।

तस्मादाप्तपुरुषाधिष्ठितः सन्निधाता [५० द्वि.] निचयाननुतिष्ठेत् ।

बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि ।
यथा पृष्टो न सज्जेत व्यये शेषे च संचये ॥

॥ इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे[14] पञ्चमोऽध्यायः[15] ॥

*

## [ समाहर्तृसमुदयप्रस्थापनम् । ]

समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चाव(वे)क्षेत[16] ।

---

1 sJG °स्थीयं महा° । 2 sJG °स्थानमपसारतः । 3 sJG °कक्ष्यं । 4 sJG च । (‡ एषा पंक्तिः मूलादर्शे नोपलब्धा ।) 5 sJG तेन । 6 sJG °करणेषु युक्तो° । 7 s पणादिचतुष्पणाः; svl पणद्विपणचतुष्पणपर; J पणादि चतुष्पणपरमा°; G पणद्विपणचतुष्पणपणाः । 8 sJG °त्सहारागाम° । 9 sJG °दण्डः । 10 svl J °मविज्ञाने । 11 sJG चोराणा° । 12 sJG निचयाननुतिष्ठेद् । 13 sJG व्ययशेषे च संचये । 14 s 'द्वितीयेऽधिकरणे' नास्ति । 15 sJ सन्निधातृनिचयकर्म: पञ्चमोऽध्याय आदितः षड्विंश ; G पञ्चमो' पश्चि° आदित ° । 16 sJG चावेक्षेत ।

शुल्कं दण्डः[1] पौतवं नागरिको लक्षणाध्यक्षो मुद्राध्यक्षः सुरा सूना सूत्रं तैलं घृतं क्षारः[2] सौवर्णिकः पण्यसंस्था वेश्या द्यूतं वास्तुकं कारुशिल्पिगणो[3] देवताध्यक्षो द्वारं[4] बाहिरिकादेयं[†] च दुर्गम् ।

सीता भागो बलिः क[५१ प्र.]रो वणिक् नदीपालस्तरो नावः पत्तनं[5] विवीतं वर्तनी रज्जुश्चोररज्जुश्च राष्ट्रम् ।

सुवर्णरजतवज्रमणिमुक्ताप्रवाल[6]शङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः । पुष्पफलवाटखण्डकेदारमूलकंद[7]वापासेतुः[8] । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् । गोमहिषमजाविकं खरोष्ट्रमश्वाश्वतरं[9] च व्रजः । स्थलपथो वारिपथश्च वणिक्पथः । इत्यायशरीरम् ।

मूल्यं[10] भागो व्याजी परिघः क्लृप्तं रूपिक[11]मत्ययश्चायमुखम् ।

देवपितृपूजादानार्थं स्वस्तिवाचनमंतःपुरं[12] महानसं [५१ द्वि.] दूरतं(?)[13] प्रावर्तिमं[14] कोष्ठागारमायुधागारं पण्यगृहं[15] कर्मान्तो विष्टिः पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्यालवाटाः काष्ठतृणवाटाश्चेति[16] व्ययशरीरम् ।

राजवर्षं मासः पक्षो दिवसश्च व्युष्टम् । वर्षाहेम[न्त]ग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः । शेषाः पूर्णाः पृथगधिमासक इति कालः ।

करणीयं सिद्धं शेषम् । आय-व्ययौ नीवी च । संस्थानं प्रचारः शरीरावस्थापनमादानं सर्व[स]मुदयपिंडः[17] सञ्जातमेतत्करणीयम् । कोशार्पितं राजहारः पुरव्ययश्चाप्रविष्टं[18] परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापतनीय[19]मेतत् सिद्धम् ।

सिद्धिकर्मयोगो[20] दण्डशेषमाहरणीयम् । बलात्कृतप्रतिष्टब्ध[21]मवमृष्टं[22] च प्रशोध्य[23]मेतच्छेषमसारमल्पसारं च ।

वर्तमानः पर्युषितोऽन्यजातश्चायमिति[24] । दिवसानुवृत्तो वर्तमानः । परमसांवत्सरिकः परप्र[५२ प्र.]चारसंक्रांतो वा पर्युषितः । नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं डमरगत[25]कस्वमपुत्रकं निधिश्चान्यजातः ।

---

1 svl शुल्कदण्डः । 2 sJ क्षारं । 3 sJG °शिल्पिगणो । 4 sJG द्वारकाहि° । † 'आदेयमिति सर्वत्र योज्यं' इति टिप्पणी । 5 sJG पट्टनं; svl पत्तनं । 6 s प्रवाळ । 7 sJG 'कंद' नास्ति । 8 sJG °वापाः सेतुः । 9 sJG अश्वतराश्च । 10 sJG मूलं । 11 sJG रूपिकम° । 12 s °मन्तःपुरमहानसं; svl °पुरम् । 13 sJG दूतप्रा° । 14 sJG प्रावर्तनं; J प्रवर्तनं । 15 sJG कुप्यगृहं कर्मान्तो । 16 sJG °वाटश्चेति; svl वाटा । 17 sJG पिण्डसञ्जात° । 18 JG °श्चाप्रविष्टः; sG °श्च प्रविष्टं । 19 sJG चापातनीय° । 20 sJG °प्रकर्मयोगः । 21 sJG °प्रतिलब्ध° । 22 sJG °मवसृष्टं; svl °मप्रसृष्टं । 23 sJG प्रशोध्यम् । 24 sJG °श्चायः । 25 sJG डमरगतक°; svl डमरगतमृत° डमरगतमृत° ।

विक्षेपव्याधितांतरारंभशेषं[1] च व्ययप्रत्यायः ।

विक्रये पण्यानामर्घवृद्धिरुपजा मानोन्मानविशेषो व्याजी क्रयसङ्घर्षे चाऽर्घवृद्धिरित्यायः । नित्यो नित्यौत्पादिको लाभो लाभौत्पादिक इति व्ययः ।

दिवसानुवृत्तो नित्यः । पक्षमाससंवत्सरलाभो लाभः । तयोरुत्पन्नो नित्यौत्पादिको लाभौत्पादिक इति व्ययः ।

संजातादायव्ययविशुद्धा नीवी । प्राप्ता चानुवृत्ता च ।

एवं कुर्यात्समुदयं वृद्धिं चायस्य दर्शयेत् ।
ह्रासं व्ययस्य च प्राज्ञः साधयेच्च विपर्ययमिति[10] ॥

॥ इति अध्यक्षप्रचारे द्वितीयेऽधिकरणे[11] षष्ठोऽध्यायः । समाहर्तृसमुदयप्रस्थापनम् ॥

*

## [ अक्षपटले गाणनिक्याधिकारः । ]

अक्षपटलमध्यक्षः प्रागमुखमुदग्मुखं वा विभक्तोपस्थानं निबन्ध[५२ द्वि] पुस्तकस्थानं कारयेत् ।

तत्राधिकरणानां सङ्ख्याप्रचारसञ्जाताग्रम् । कर्म्मान्तानां द्रव्यप्रयोगवृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणम् । रत्नसारफल्गुकुप्यानामर्घप्रतिवर्णकमानप्रतिमानोन्मानावमानभाण्डम् । देशग्रामजातिकुलसंघानां[18] धर्मव्यवहारचरित्र[सं]स्थानम् । राजोपजीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभम् । राज्ञश्च पत्नीपुत्राणां सारत्नभूमिलाभं[21] निर्देशोत्पातिकप्रतीकारलाभम् । मित्रामित्राणां च सन्धिविग्रहप्रदानादानं निबन्धपुस्तकस्थं का[५२ प्र.]रयेत् ।

ततः सर्वाधिकरणानां करणीयं सिद्धं शेषमायव्ययौ नीवीमुपस्थानं प्रचारं चरित्रं संस्थानं च निबन्धेन प्रयच्छेत् । उत्तममध्यमावरेषु च कर्म्मसु तज्जातिकमध्यक्षं कुर्यात् ।

सांमुदायिकेष्ववक्लृप्तिकं [व्य]यमुपहत्य राजा नानुतप्येतेति[28] ।

---

1 sJG °शेषच । 2 sJ °प्रत्ययः । 3 sJG वा वृद्धिरित्यायः । 4 sJG नित्यो° । 5 sJG लाभो° । 6 sJG नित्यो° । 7 sJG लाभो° । 8 s इति व्ययसंजात । 9 sJG चेति । 10 sJG 'इति' नास्ति । 11 s 'द्वितीयेऽधिकरणे' नास्ति । 12 sJ समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः आदित° सप्तविंशः; G षष्ठो° समाहर्तृ° आदित.° । 13 प्रागमुख-; svl प्राङ्मुख° । 14 sJ सङ्ख्या प्रचार° । 15 sJG प्रयोगे वृद्धि° । 16 sJG °वर्णकप्रतिमानमानोन्माना° । 17 s °मानावमानभाण्डं; G मानोन्मानभाण्डं । 18 sJ संघातानां । 19 sJG °भोग° । 20 sJG 'सार' नास्ति । 21 s लाभनिर्देशो° । 22 G निर्देशोत्पादिक° । 23 sJG °विक्रम° । 24 sJ °दानानि°; svl दानं । 25 sJG प्रचारचरित्रसंस्थानं । 26 sJ समुदायि° । 27 sJG राजाऽनुत° । 28 sJG 'इति' नास्ति ।

सहग्राहिणः प्रतिभुवः कर्म्मोपजीविनः पुत्रा भ्रातरो भार्या दुहितरो भृत्याश्चास्य कर्मच्छेदं वहेयुः ।

त्रिशती चतुःपंचाशच्चाहोरात्राणां कर्मसंवत्सरः । तमा[पा]ढीपर्यवसानमूनं पूर्णं वा दद्यात् । करणाधिष्ठितमधिमासकं कुर्यात् ।

अर्वसर्प्पाधिष्ठितं च [५३ द्वि.] प्रचारं प्रचारचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतः समुदयमज्ञानेन परिहापयति । उत्थानक्लेशासहत्वादालस्येन । शब्दादिष्विन्द्रियार्थेषु प्रसक्तः प्रमादेन । संक्रोशाधर्म्मानर्थभीरुर्भयेन । कार्यार्थिष्वनुग्रहबुद्धिः कामेन । हिंसाबुद्धिः कोपेन । विद्याद्रव्यवल्लभापाश्रयाद्दर्पेण । तुलामानतर्कगणितांतरोपधानाल्लोभेन ।

तेषामानुपूर्व्या यावानर्थोपघातस्तावानेकोत्तरो दण्ड इति मानवाः । सर्वत्राष्टगुण इति पारासराः । दशगुणं [इति] बार्हस्पत्याः । विंशतिगुण इत्यौशनसाः । यथापराधमिति कौटल्यः ।

गाथनिक्यात्योपाढीमागच्छेयुः । आगतानां समुद्रपुस्तकभाण्डनीवीकानामेकत्रासम्भाषा[५४ प्र.]वरोधं कारयेत् । आयव्ययनीवीनामग्राणि श्रुत्वा नीवीमपहारयेत् । यच्चाग्रादायस्यान्तरपर्णे नीव्यां वर्द्धेत व्ययस्य वा तत्परिहापयेत् । तदष्टगुणमध्यक्षं दापयेत् । विपर्यये तदेवं प्रति स्यात् ।

यथाकालमनागतानामपुस्तकभांडनीवीकानां वा देयदशबन्धो दण्डः । कार्म्मिके चोपस्थिते कारणिकस्याप्रतिबध्नतः पूर्वसाहसदण्डः । विपर्यये कार्मिकस्य द्विगुणः । प्रचारसमं महामात्राः समग्राः श्रावयेयुरविषममन्त्राः पृथग्भूतो मिथ्यावादी चैषामुत्तमं दण्डं दद्यात् । अकृताहोरूपहरं मासमाकांक्षेत । मासादूर्द्ध्वं मासद्विशतोत्तरं दण्डं दद्यात् ।

अल्पशेषलेख्यनीवीकं पंचरात्रमाकांक्षेत । ततः परं कोशपू[५४ द्वि.]...

× × × ×

[ इतोऽग्रे पुस्तिका त्रुटिता । केवलं ६४ तममेकं पत्रमुपलभ्यते । तत्र च निम्नावतारितः पाठः पठ्यते । ]

*

[२ अधि० १० अध्या० २९ प्रक० कोशप्रवेश्यरत्न-
परीक्षाधिकारगतमिदं वर्णनं ज्ञेयम् ।]

............ति । शुद्धा मणिमध्या वा यष्टिः । हेममणिचित्रा रत्नावली । हेममणिमुक्तान्तरोपवर्तकः । सुवर्णसूत्रान्तरं सोपानकम् । मणिमध्यं वा मणिसोपानकम् । तेन शिरोहस्तपादकटीकलापजालकविकल्पा व्याख्याताः ।

मणिः कौटो मालेयकः पारसमुद्रश्च । सौगंधिकः पद्मानवद्यरागः पारिजातपुष्पको बालसूर्यकः पंचधा पद्मरागः । वैडूर्य उत्पलवर्णः शिरीषपुष्पक उदकवर्णो वंशरागः शुकपत्रवर्णः पुष्परागो गोमूत्रको गोमेदकः । शुद्धस्फटिको मूलाटीवर्णः । इंद्रनीलो[10] नीलावलीयकः कलायपुष्पकः । महानीलो जंब्वाभो जीमूतप्रभः । नंदकः स्रवन्मध्यः शीतवृष्टिः सूर्यकांतश्चेति मणयः । ॥ षडश्रिश्चतुरस्रो वृत्तो वा तीव्र[६२ प्र.]रागः संस्थानवानच्छः स्निग्धो गुरुरर्चिष्मानंतरगतप्रभः प्रभानुलेपी चेति मणिगुणाः ।

मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खंडो दुर्विद्धो लेखाकीर्ण इति दोषाः । विमलकः सस्यकोंजनमूलकः पित्तकः सुलभको लोहिताक्षो[11] मृगाश्मको ज्योतीरसको मालेयकोऽहिच्छत्रकः कूर्पप्रतिकूर्पः सुगंधिकूर्पः । क्षीरवकः ॥ शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलकः इत्यन्तरजातयः । शेषाः काचमणयः ।

सभाराष्ट्रकं तद्रोमाराष्ट्रकं कास्तीरराष्ट्रकं श्रीकटनकं मणिमन्तकं इंद्रवानकं च वज्रम् । खनिः स्रोतः प्रकीर्णकं च योनयः । मार्जाराक्षकं शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीवर्णम् । [६४ द्वि.] ॥

*
* *

# कतिपयविशिष्टार्थबोधकपदानां टिप्पणीनिर्दिष्ट-व्याख्योपेतशब्दानामकाराद्यनुक्रमेण सूचिः ।

*

कुहक° मायायोगविद् ५१
कृतकर्मा कृतं बहुशः समरेषु अद्भुतं कर्म येन ५२
कृत्याऽव्यय° पण्यागारढौकनिकयाऽलब्धसमीहितकार्य° २६
कृत्या° परैरात्मसात् कर्तुं शक्यंत इति २६
गुप्तदेश° नियुक्तव्यतिरिक्तानां अदृश्य° ५२
गुप्तपुत्रदारा° निग्रहायोग्या° २६
ग्राम° शूद्रादिजातिसमूहो ग्राम° ५६
ग्राम्यसुख° ग्राम्यशब्देन शब्दस्पर्शरूपरसगंधाभिधाना विषया ग्राह्याः ग्रामाणां साधूनि ग्राम्याणि विषयसुखानीत्यर्थः ४०
गृहीतपरिचय° अभ्यास° ९
चक्षुष्मान् शास्त्रचक्षुः १३
चक्र° राज्यचक्र° ११
चक्षु° इन्द्रियकार्य° ११
छिद्र° रक्षाशैथिल्यं व्यसनादि वा ३५
जटिल° पाशुपतादि° १९
जनपद° जनाश्चातुर्वर्ण्यं ते पदं तेऽवस्थानं कुर्वंति यस्मिन् असौ पृथ्वीभाग° ५६
जाङ्गुली बौद्धप्रसिद्धा विद्या ५४
जीवन्ती बोडी ५०
तलावपात° तले भूमिकातुलोपरि फलकास्तारादिलक्षणं तस्यावपातः शत्रोरुपरि पात° ५०
तीर्थ° { मंत्र्यादि° २३
यत्रावतरंति° जनाः पुण्यार्थमर्थार्थं वा सोमनाथ–कालप्रियादिक° } २४
त्वक° दीर्घावसंधेय° ४५
दशवर्गिका° दशपुरुषवर्गनियुक्ता ५५
द्रव° रस° ५३
द्रव्य° मल्लघटकादि° ५३
दायाद्यादपरुद्ध° न्यायलभ्यात् दायलभ्यद्रव्यांशात् बहिःकृत° २७
दैवताकार्य° देवद्रव्यादिनिमित्तो विवाद° ४८
दृश्यादृश्या° दृश्या रक्षिणो विजिगीषु निद्रुकाद्योपरिरक्षणार्थम्। अदृश्या गुप्तांतर्हिता गूढपुरुषाः ३८
धर्मार्थद्वेषी धर्मद्वेषी नास्तिकत्वात्। अर्थद्वेषी देयपरत्वात् ४२
धारयिष्णु° अभिसरणशील° ११
नष्टरूप° प्रच्छादितपूर्ववर्णवेषादि° ४४
नियम° ब्रह्मचर्यैकभक्तादि° ८
नियोगसम्पद्° पुरुषबाहुल्य° ३२
निर्वपन्ति रजोद्देशेन भूमौ यच्छन्ति २५
निसृष्टार्थ° निसृष्ट उत्सृष्टो नियमाभावात्संधिविग्रहादिको अर्थो यस्य ३३
पण्य° { कुंकुमादि° २४
स्नेहक्षारलवणादि° } ३७
पराक्रम° परेषां सारबलादिवधादाक्रमण° ३८
परिमितार्थ° संधिर्विग्रहो वा कर्तव्य इति परिमितो नियतोऽर्थो यस्य ३४
परिवाप° पटकुटीच्छत्रासनार्थादि° ३४
पुण्यस्थान° { शालादि° ३६
तीर्थतडागादि° } ४८
पुण्यकर्म° न्याय्य° ४३
पुरुष° पौरुषयुक्त आयुधीयपुरुष° ३४
पूगाः श्रेणीगणास्तंतुवायादीनाम् २४
प्रगल्भा° जितसभा° २१
प्रच्छन्न° कुड्यान्तरित° २९
प्रतिदूत° दूते अन्वागते यः संप्रेष्यते स प्रतिदूतः° ३८
प्रतिपत्ति° प्रतिभा–अविमर्शेऽपि यथावदुत्तरं दीयते १३
प्रत्यन्तम् आटविकविषयम् ४२
प्रत्यापत्तिः आसमंतादापतनमापत्तिः प्रति=विपरीता वा आपत्तिः प्रत्यापत्तिः ३९
प्रदेष्टा कंटकशोधनाधिकृतः २१
प्रघर्ष° उद्वर्तनं सुगंधमेव प्रघर्षः ५४
प्रभावः { दैवजनिता प्रभुशक्तिः प्रभावः १२
सामर्थ्यम् } ५३
प्रमाद° { कर्मान्तरासंगेन मंत्ररक्षाविस्मरणम् २९
इन्द्रियार्थप्रसक्तिः } ३७
प्रसाधकाः शरीरशोभाकर्तारः ५४
प्रवासितबन्धुः यमपुरं प्रेषितबांधवः २७
फेनमाय° विच्छिन्नभाव° ५३
बन्धु° शत्रुबंधुः° ३८
बाह्यविहार° उद्यानादि° १७
भाण्डगूढलेख्य° दर्भभाण्डान्तरनिहितगूढलेख्य° २२
भृङ्गराज° कृष्णः दुष्कर्माः पक्षी° ५०
भृता भागेन कृषाः २४

मत्स्य° शिशुमारादि° ५५
मातृबन्धु { मातुलादि ४०
मातृबन्धु { क्षेत्रभूताया देव्या ज्ञातिः ४२
मानुषाग्निः वज्रहतस्य शूलप्रोतस्य वा नरस्य वामपार्श्विशाया कल्माषवेणुनिर्मथनोत्पन्नो मानुषोऽग्निः ५०
मायायोगविद् स्तंभमोहादिप्रयोगविद् ४८
मिथ्याचार° द्यूतादिव्यसन° २७
मुण्ड° शाक्याजीवादि° १९
मुण्डा आर्हतबुद्धभिक्षुक्यः २१
मुष्ककपुष्पवन्दाक° मुष्कके जातपुष्पोपलक्षितो वंदाक° ५०
याचनक° कुतक° ३६
योगपान° मदनीयविरेचनीयौषधयुक्तपान° ४१
योगपुरुष° तीक्ष्णरसदादि° ५५
राष्ट्रप्रमाणम् परस्य तदनुरूपकोशपरिच्छिन्नस्यर्थे लाभे चोत्तमस्य प्रतिग्रहार्थं राष्ट्रप्रमाणम् ३४
राष्ट्रमुख्य° ग्रामवृद्धमहत्तरादि° ३४
लोकयात्राविद् लोकव्यवहारविद् ४
वनेचर° मुण्डतापसबौद्धजैन° २३
वर्ण° रागसमुदाय° ५३
वाक्यपूजन° कृतवाक्यस्य साधूक्तमिति ३५
वाक्यविप्रेक्षणम् परवाक्याकर्णनम् ५४
वास° सुगंधकल्पः धूप° ५४
वास्तुक° वास्तुविद्याविद् ४९
वार्ता वृत्तिरेव वार्ता जगद्वृत्तिहेतुत्वात् कृष्यादिका ४
विग्रह° अंतःकोपादिक° ३७
विधवा स्वतंत्रा २१
विनय° प्रत्युत्थानविनयादि° ८
विप्रकृतम् विरुद्धं प्रकर्षेण कृतम् २७
वैदेहकव्यञ्जनः विदेहराज्याद्यानुष्ठानाद् वैदेहकव्यंजनः १९
वृद्ध° क्षीणशुक्र° ४२
व्यञ्जनसख° धार्यादिव्यंजनानां सखा भूत्वा ४४
व्यावहारिक° पुरव्यवहारे नियुक्त° २१
सगंधः गंधः परिचयजनितस्नेहः संवासाभ्यासजा प्रीतिः समानो गंधः सगंधः १२
सत्रि° विद्यमानमपि त्रायति गोपायतीति सत्रं छद्म तद्विद्यते यस्य स २०
सन्निधातृ° गृहामात्य° २१
सभा सभायान्ति गोष्ठ्या जना यस्यां सा सभा २४
समवाय° प्रेक्ष्योत्सवादिषु यत्र जनाः समवयंति २४
समाहूतपराजितः समाहूय व्यवहारे पक्षपातात्पराजितः २६
समुदानं कर्तुकामः विक्षिप्तानि बलान्येकत्र कर्तुकामः ३७
सुप्त° निशालब्धत्व° २९
स्तम्भ° मिथ्याभिमानादविनय° १४
स्त्रीनिवेश° सुभगकुलस्त्रीगृहाणि ५०
संचाराः सत्र्यादयश्च कुब्जादयः संचरति संचारयति चारमिति । २१
संज्ञा { संकेतितस्वांगविकार° १९
संज्ञा { शरीरविन्यासकल्पिता संज्ञा ३६
संबन्धि° यौनादिसंबंध° ५२
संविष्टः शय्यामारूढः ४५
संसर्ग° मौनसंबंध° ३७
संसर्गविद्या संसृज्यन्ते जना यस्यां सा संसर्गविद्या गीतनृत्यादिका २०
संस्था सत्र्येकस्मिन् स्थाने स्थिता २०
शास्त्रिः निग्रहकर्ता ५५
श्वेता गिरिवर्णिका ५०
द्वैध° मित्रवधादिराबाध° २५

*
* *